# एतस्य अङ्कस्य विशेषाः

सम्पुटः - १९ मार्च् - २००३ सञ्चिका - १२



पुराणकथावली २६



रामसेनस्य निर्णयः (वेतालकथा) १९



मायासरोवरः - १२ १३



विघ्नेश्वरः - १५ ४५



## अन्तरङ्गम्




**SUBSCRIPTION**

For USA and Canada
Single copy $2
Annual subscription $20
*Remittances in favour of Chandamama India Ltd.*
to
Subscription Division
CHANDAMAMA INDIA LIMITED
No. 82, Defence Officers Colony,
Ekkatuthangal, Chennai - 600 097
E-mail : subscription@chandamama.org

**उपायनीक्रियताम्**

वायुयानेन भारतेतरदेशान् प्रति
वार्षिकं (१२ सञ्चिकाः) - रू.९००/-
भारते रू. १२०/- (बुक्पोस्ट् द्वारा)
भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा
'Chandamama India Limited'
नाम्ना प्रेषणीयम् ।

विज्ञापिकादानार्थं सम्पर्क्यताम् -
चेन्नै -
Ph - 044-2347384, 2347399
e-mail : advertisements@chandamama.org
देहली -
मोना भाटिया
Ph - 011-26515111/26565513/26565516
मुम्बयी -
शकीलमुल्ला
Ph - 022-2661599/2661946/2653057



संस्थापकौ -
चक्रपाणिः नागिरेड्डी च

# पठनप्रवृत्तेः अभिवर्धनम्

बालाः कथां शृण्वन्तः वर्धन्ते । प्राचीने काले पितामह-पितामह्यादयः कथां श्रावयन्ति स्म । अनन्तरकाले कथापुस्तकानि आगतानि, येन च बालाः श्रावयितॄणाम् अभावे अपि कथाम् अवगन्तुं शक्ताः अभवन् । गच्छता कालेन 'बालसाहित्यम्' इति कश्चन साहित्यप्रकारः एव विकसितः जातः । सर्वासु अपि भाषासु तादृशस्य साहित्यस्य निर्माणम् अपि जातम् । भारते अपि तादृशानि पुस्तकानि रचितानि मुद्रितानि प्रकाशितानि च । तानि पठन्तः ज्ञानं, मनोरञ्जनं च प्राप्नुवन्तः पठितारः अपि लाभान्विताः जाताः । तथापि सर्वान् बालान् प्राप्तुं यावत् आवश्यकं तावता प्रमाणेन तु साहित्यरचना न जाता ।

एतस्मिन् क्षेत्रे सिङ्गपुरे कृताः प्रयोगाः वस्तुतः अनुकरणार्हाः सन्ति । सिङ्गपुरं कश्चन लघुः द्वीपः । तत्रास्ति काचित् 'सिङ्गपुर-भारत-अभिवृद्धि सङ्घः' (सिण्डा) नाम । तया स्वीकृता योजना - 'पठनपरियोजना' नाम । सप्ताहे एकवारं द्विवारं वा 'सिण्डा'याः कार्यकर्तारः गृहाणि गत्वा बालानां पुरतः कथाः पठन्ति । बालेषु पठनप्रवृत्तेः प्रोत्साहाय 'पठनकेन्द्राणि' अपि सन्ति । एतानि केन्द्राणि कार्यकर्तृभिः चाल्यन्ते । बालाः नियततया तत्र गच्छन्ति । स्थानीयेषु ग्रन्थालयेषु 'ग्रन्थालयसहाय-केन्द्राणि' अपि भवन्ति । ग्रन्थालयाः सर्वैः परिवारसदस्यैः उपयुज्यन्ते । एवं तत्र बालान् साहित्यस्य प्रापणाय उत्तमा व्यवस्था अस्ति ।

भारते अपि बहुषु राज्येषु ग्रन्थालयान्दोलनं प्रबलम् अस्ति । अतः बालेषु पठनप्रवृत्तेः वर्धनाय विघ्नः न स्यात् । पुस्तकानि भवन्ति पठनाय एव । 'पठनं परिपूर्णव्यक्तित्वं निर्माति' इति श्रूयते किञ्चन आभाणकम् ।

सम्पादकः - विश्वम्



# निःशुल्कं मार्गदर्शनम्

सदाशिवस्य पित्रार्जिता सम्पत् बहु आसीत् । अतः सः पत्नीपुत्रैः सह सुखेन जीवनं यापयति स्म । यदाकदाचिदपि कठिना समस्या भवति चेत् ग्रामाधिकारी तद्ग्रामस्थाः च सदाशिवस्य समीपम् आगच्छन्ति स्म । सदाशिवः सर्वं विवरणं श्रुत्वा समस्यायाः समाधानं वदति स्म । एवमेव सः बहूनां साहाय्यं कृतवान् आसीत् ।

सदाशिवद्वारा एतादृशं साहाय्यं स्वीकृतवत्सु सूरदासः अपि अन्यतमः । सूरदासः कश्चित् वणिक् । एकदा तस्य तण्डुलस्य गोण्यः आर्द्राः अभवन् । सः दुःखितः सन् सदाशिवस्य समीपम् आगतवान् । तदा सदाशिवः उक्तवान् - ''चित्रापुरे जनाः अर्धपक्वम् तण्डुलमेव अन्नं कर्तुम् उपयुञ्जते । तत्र गत्वा एतेषां विक्रयणं करोतु'' इति ।

सदाशिवस्य सूचनानुसारं सूरदासः तण्डुलानां विक्रयणं कृत्वा द्विशतरूप्यकाणां लाभं प्राप्तवान् । पुनः कदाचित् सः कस्यचित् धनिकस्य निमित्तं वज्रहारं कारितवान् । किन्तु सः हारः धनिकाय न अरोचत । सूरदासः स्वस्य कष्टं सदाशिवं निवेदितवान् ।

तदा सदाशिवः - ''रत्नपुरस्य भूस्वामी विविधहाराणां सङ्ग्रहणम् इच्छति । सः एतं हारं क्रीणीयात् । न केवलं तावत्, भवते योग्यम् उपायनम् अपि दद्यात् सः'' इति । सदाशिवस्य विचारः उचितः इति सूरदासाय अभासत । एतेन सः द्विसहस्रं रूप्यकाणि लाभरूपेण प्राप्तवान् ।

कदाचित् विंशतिवर्षीयः कश्चन अनाथः युवकः सूरदासस्य गृहं प्रति आश्रयं सम्प्रार्थ्य आगतवान् । तस्य नाम चन्द्रः इति । किन्तु

जनाः 'चन्द्रः वञ्चकः' इति वदन्ति स्म । सूरदासः अपि कञ्चित् सेवकम् इच्छति स्म । किन्तु चन्द्रं गृहे स्थापयितुं तस्य धैर्यं न आसीत् । अतः सः एतस्मिन् विषये सदाशिवस्य अभिप्रायं पृष्टवान् ।

तदा सदाशिवः - ''जन्मना कोऽपि दुष्टः न भवति । भवान् तस्मिन् विश्वसिति चेत् सोऽपि भवति विश्वस्यात्'' इति उक्तवान् ।

सूरदासः चन्द्रं गृहे स्थापितवान् । किन्तु एकदा चन्द्रः द्विसहस्रं रूप्यकाणि चोरयित्वा गृहात् पलायनं कृतवान् ।

सूरदासः क्रुद्धः सन् सदाशिवस्य समीपम् आगत्य - ''भवतः कथनम् अनुसृत्य अहं चन्द्रं गृहे स्थापितवान् । एतेन मम द्विसहस्रं रूप्यकाणि नष्टानि । भवता मह्यं परिहारधनं दातव्यम्'' इति उक्तवान् ।

तत् श्रुत्वा सदाशिवः अपि कोपेन - ''सूचनादानमात्रं मम कार्यम् । तस्य फलं तु भवतः आचरणम् अवलम्ब्य तिष्ठति । यदि भवान् तस्मिन् विश्वासम् अकरिष्यत् तर्हि सः वञ्चनां न अकरिष्यत्'' इति उक्तवान् ।

तदा सूरदासः - ''अहं चिन्तितवान् यत् 'भवान् उचितां सूचनां दद्यात्' इति । किन्तु भवतः सूचना सम्यक् न आसीत् । अतः मम द्विसहस्ररूप्यकाणां हानिः अभवत् । तावत् धनं भवता एव दातव्यम् । यदि भवान् मह्यं धनं न दद्यात् तर्हि अहं ग्रामाधिकारिणः समीपं गमिष्यामि'' इति उक्तवान् । किन्तु सदाशिवः एतस्य उपेक्षां कृतवान् । अतः सूरदासेन विषयः ग्रामाधिकारिणः समीपं नीतः ।

ग्रामाधिकारी प्रवृत्तं सर्वं विचारितवान् । 'सूरदासस्य वचने विश्वस्य साहाय्यं कृतं चेत् अग्रे सदाशिवः कदापि इतरेभ्यः निश्शुल्कं सूचनाः न दद्यात्' इति विचिन्त्य ग्रामाधिकारी



सदाशिवेन मेलितुं गतवान् । तम् उद्दिश्य - ''सूरदासाय योग्यः पाठः न पाठितः चेत् ग्रामे दुष्टानां संख्या अधिका भवेत् । अतः भवान् एव कश्चित् परिहारोपायं सूचयतु'' इति उक्तवान् ग्रामाधिकारी ।

सदाशिवः उपायं सुचितवान् । परेद्यवि तस्य उपायानुसारं ग्रामाधिकारी सर्वान् ग्रामीणान् आहूय सूरदासस्य आक्षेपं विवृत्य - ''एतस्य आक्षेपः उचितः एव इति भाति । सदाशिवस्य मार्गदर्शनं किमर्थं स्वीकृतम् इति एषः आदौ सविवरणं वदेत्'' इति उक्तवान् ।

तदा सूरदासः - ''इतः पूर्वमपि द्विवारं सदाशिवः मम मार्गदर्शनं कृतवान् आसीत् । तेन अहं लाभान्वितः जातः आसम् अपि । अतः तस्मिन् विश्वासं प्रदर्शितवान् अहम्'' इति विवृतवान् ।

तदा ग्रामाधिकारी - ''एवं तर्हि सदाशिवेन परिहारधनं दातव्यम् एव । सदाशिवेन सहस्रं रूप्यकाणि सूरदासाय दातव्यानि । किन्तु ततः पूर्वं सदाशिवस्य मार्गदर्शनेन सूरदासेन द्विवारं यः लाभः प्राप्तः तस्य कश्चन अंशः तेन सदाशिवाय दातव्यः । सर्वं गणयामः चेत् सिद्धं भवति यत् सदाशिवाय सूरदासेन धनं दातव्यम्'' इति स्वस्य निर्णयं श्रावितवान् ।

एतत् श्रुत्वा सर्वे ग्रामीणाः हसितवन्तः । तदा ग्रामाधिकारी गम्भीरस्वरेण - ''इतः परं ये सदाशिवस्य मार्गदर्शनेन लाभान्विताः भविष्यन्ति तैः लाभांशस्य कश्चन भागः सदाशिवाय दातव्यः । यदि हानिः भवेत् तर्हि तां सदाशिवः पूरयिष्यति'' इति उक्तवान् ।

पूर्वं ये जनाः सदाशिवद्वारा निःशुल्कं मार्गदर्शनं प्राप्नुवन्ति स्म तैः इदानीं तदर्थं मूल्यं दातव्यम् आपतितम् । अतः ग्रामीणाः सर्वे सूरदासस्य निन्दनम् आरब्धवन्तः । सदाशिवः तु - 'स्वार्थिनां स्वार्थः एव सज्जनानां साहाय्यम् आचरति । वस्तुतः सूरदासः मम उपकारमेव कृतवान् । इतःपरं कस्यचित् अपि मार्गदर्शनं कदापि मया निःशुल्कं न क्रियते' इति निश्चितवान् । तदारभ्य सः सुखेन जीवनम् आरब्धवान् ।





# वृद्धायाः साहाय्यम्

उदयः श्रीपुरग्रामात् रामपुरं प्रति प्रस्थितः । रामपुरप्राप्तिसमये महान् विलम्बः जातः । यतः मार्गः असमीचीनः आसीत् ।' उदयः रामपुरं पूर्वं न दृष्टवान् आसीत् । अतः 'अस्यां रात्रौ कुत्र वसामि, भोजनादिकं कथम्' इति चिन्ता उत्पन्ना तस्मिन् । एवं चिन्तयन् सः कस्यचित् गृहस्य द्वारं ताडितवान् ।

क्षणानन्तरं काचित् वृद्धा द्वारम् उद्घाटितवती । तां दृष्ट्वा उदयः उक्तवान् - ''मातः, अहं श्रीपुरवासी । मम नाम उदयः । उद्योगम् अन्विष्यन् अत्र आगतः । महती बुभुक्षा बाधते माम्'' इति ।

वृद्धा उदयं क्षणकालं दृष्ट्वा उक्तवती - ''अन्तः आगच्छतु'' इति । सा तस्मै भोजनमपि दत्तवती । भोजनं कृत्वा उदयेन उक्तं - ''मातः ! रात्रौ अहम् अत्रैव निद्रामि । प्रातः एव इतः प्रस्थास्ये'' इति । ततः गृहं सर्वं पश्यन् सः तां वृद्धां पृष्टवान् - ''गृहे अन्यः कोऽपि न दृश्यते किल'' इति ।

''मम पुत्रः स्नुषा च पार्श्वग्रामं गतौ स्तः । श्वः आगमिष्यतः तौ'' इति उक्तवती वृद्धा ।

शयनात् पूर्वम् उदयः स्वस्य कथां वृद्धाम् उक्तवान् - ''मम मातापितरौ स्तः । पिता दुर्व्यसनी सञ्जातः इति कारणात् अस्मदीयं क्षेत्रं विक्रीतम् अभवत् । अतः अहम् उद्योगम् अन्विष्यन् अत्र आगतः'' इति ।

ततः सः द्वारसमीपे एव शय्यां प्रसार्य सुप्तवान् । किन्तु तेन शयनसमनन्तरम् एव निद्रा न प्राप्ता । सुवर्णस्य मेखलां कपाटिकायां संस्थाप्य कीलयित्वा कुञ्चिकाम् उपधानस्य अधः स्थापयन्ती वृद्धा दृष्टा तेन ।

सर्वं दृष्टवतः उदयस्य मनसि विचारः आगतः - 'एतां मेखलां चोरयामि चेत् कानिचन दिनानि मम उदरपूरणसमस्या न भवेत्' इति । अनन्तरक्षणे तस्य मनः अवदत् - 'एतादृशः दुष्टः विचारः न करणीयः । या वृद्धा बुभुक्षिताय मह्यं भोजनादिकं दत्त्वा शयनार्थं स्थलमपि दत्तवती, तस्याः विषये

एवं चिन्तनमेव असाधु' इति । एवं तस्य मनसि अनेके विकल्पाः आगताः । ततः 'एतादृशः सुसमयः सर्वदा न प्राप्यते' इति कश्चन निर्णयः कृतः तेन ।

उदयः किञ्चित्समयपर्यन्तं निद्रायाः अभिनयं कृतवान् । ततः निश्शब्दम् उत्थितवान् । तावति काले तेन कयोश्चित् बहिः वार्तालापः श्रुतः । वातायनसमीपम् आगत्य उदयः स्थितवान् । बहिः कश्चित् अन्यं वदति स्म - ''तिष्ठतु । वृद्धायाः समीपे न केवलं मेखला अस्ति, अपि तु अनेकानि आभरणानि अपि सन्ति । यदि चौर्यसमये सा कोलाहलं कुर्यात् तर्हि वस्त्रेण तस्याः मुखम् आच्छाद्य समग्रं धनं लुण्ठयाव'' इति ।

एतत् श्रुतवतः उदयस्य मनसि लज्जा उत्पन्ना । यतः सोऽपि तथैव कर्तुम् उद्युक्तः आसीत् । सः शनैः वृद्धायाः समीपम् आगत्य वृद्धाम् उत्थाप्य चोरयोः वार्तालापं सर्वम् उक्त्वा अग्रे किं करणीयम् इत्यपि उक्तवान् ।

ततः उदयः द्वारम् उद्घाट्य वृद्धया सह बहिः आगतः । चोरौ एतत् दृष्ट्वा सन्तुष्टौ । 'द्वारं तु उद्घाटितम् अस्ति, गृहे अन्यः कोऽपि नास्ति' इति चिन्तयन्तौ तौ यदा गृहं प्रविष्टौ तदा बहिः स्थितः उदयः द्वारं पिधाय कीलितवान् । इदानीं चोरौ बन्धितौ जातौ ।

वृद्धा उच्चैः - 'चोरः चोरः' इति आक्रोशनं कृतवती । तदा पार्श्वगृहस्थाः धावन्तः आगत्य द्वारम् उद्घाट्य चोरौ गृहीतवन्तः, तौ ग्रामाधिकारिणः समीपं नीतवन्तः च ।

तदा उदयः वृद्धायाः पादौ गृहीत्वा - ''मातः ! मामपि ग्रामाधिकारिणः अधीनं करोतु । यतः एतौ चोरौ यदि न आगच्छेताम् तर्हि अहम् एव एवं कर्तुम् उद्युक्तः अभविष्यम्'' इति उक्तवान् ।

वृद्धा तं प्रीत्या पश्यन्ती उक्तवती - ''वत्स ! असहायां मां दृष्टवतः भवतः मनसि चौर्यचिन्तनम् उत्पन्नम् । किन्तु एतं विचारं माम् उक्त्वा भवान् निष्कलङ्कः अभवत् । तावदेव न, चोरौ गृहीत्वा मम आभरणानि रक्षितानि अपि भवता । अतः इदानीं भवान् मम पुत्रः इव । मम पुत्रस्य आगमनस्य अनन्तरं तेन सह भवानपि क्षेत्रकार्यं कुर्वन् अत्रैव अस्माभिः सह वसतु'' इति । एतत् श्रुत्वा उदयः कृतज्ञतापूर्वकं वृद्धां नमस्कृतवान् ।





# मायासरोवरः

## १२

*[जयशीलस्य प्रबलः शत्रुः कृपाणजित् मृत्युवृक्षस्य आहुतिः जातः । ततः जयशीलः सिद्धसाधकेन सह मायासरोवरस्य अन्वेषणकार्यम् अनुवर्तितवान् । सर्पणखः अपि तस्य अनुसरणं कृतवान् । गुहातः निर्गच्छन्तं नरवानरं जलग्रहः स्वस्य शुण्डया गृहीतवान् । एतत् जयशीलादिभिः त्रिभिः अपि दृष्टम् । तदनन्तरम् ....]*

जलग्रहस्य दर्शनात् जयशीलसिद्धसाधकौ इव सर्पणखः अपि आश्चर्यचकितः जातः । जलाश्वतः अवतरणं कर्तुम् इच्छन् अपि सः अवतरणात् पूर्वम् उक्तवान् - ''जयशील ! सिद्धसाधक ! जलग्रहनामकः एषः जले गमने समर्थः गजः महाशक्तिशाली । एषः मकरकेतोः वाहनम् । मकरकेतुः तु मायासरोवरेश्वरेण 'सेवकश्रेष्ठ'नामकं बिरुदं प्राप्तवान् अस्ति'' इति ।

तावता सिद्धसाधकः 'जय महाकाल' इति सकृत् उद्घोष्य शूलम् उन्नीय - ''अये जलग्रह ! मकरकेतोः सामर्थ्यं कियत् इति जानीमः । यः मम वाहनं भवितुम् अर्हति तादृशं नरवानरं मारयितुम् उद्युक्तं भवन्तम् आदौ यमसदनं प्रति प्रेषयिष्यामि । तदनन्तरं भवतः स्वामिनं मकरकेतुं भगवते महाकालाय बलिरूपेण अर्पयिष्यामि'' इति वदन् गुहायाः दिशि धावितवान् ।

''सिद्धसाधक ! अलं त्वरया'' इति वदन् जयशीलः सिद्धसाधकस्य गमनं निवारितवान् ।



ततः सः स्वस्य वाहनं जलाश्वं किञ्चित् अग्रे नीत्वा सिद्धसाधकं मन्दस्वरेण अवदत् - ''सिद्धसाधक ! मायासरोवरं प्राप्तुं कश्चन सुवर्णावकाशः सम्प्राप्तः अस्ति । मकरकेतुना सह मधुरैः वचनैः व्यवहरद्भिः अस्माभिः कनकाक्षस्य अपत्ययोः अपहरणं कृतवतः मायासरोवरेश्वरस्य समीपं कथमपि गन्तुम् अयं योग्यः अवसरः'' इति ।

सिद्धसाधकः उन्नीतं शूलम् अधः कुर्वन् - ''मकरकेतुः इदानीम् अपि जीवति इत्यत्र कः विश्वासः ? स्वामिनः मरणस्य अनन्तरम् एषः जलग्रहः पर्वतप्रदेशे अरण्ये च स्वेच्छया भ्रमणं कुर्वन् स्यादपि'' इति अवदत् ।

जयशीलः सिद्धसाधकः च यदा एवं वार्तालापं कुर्वन्तौ आस्तां तदा गुहायाः पुरतः नरवानरः जलग्रहः च गर्जनं कुर्वन्तौ घोरे युद्धे मग्नौ आस्ताम् । नरवानरः गजस्य ग्रहणात् कथमपि आत्मानं विमोच्य तदुपरि उपविश्य स्वस्य दंष्ट्राभ्यां तस्य कुम्भस्थलं विदारयितुं प्रयासं कुर्वन् हस्ताभ्यां तं निरन्तरं प्रहर्तुम् उद्युक्तः जातः ।

तदा गजः तं पुनरपि शुण्डया गृहीत्वा भूमौ अपातयत्, स्वस्य पादैः प्रहृत्य तं मारयितुं प्रयत्नम् अकरोत् च ।

''सिद्धसाधक ! तत्र पश्यतु ! गुहायाः ऊर्ध्वभागे न एकः, अपि तु चत्वारः दृश्यन्ते । नरवानरगजयोः युद्धं कौतुकेन पश्यन्तः सन्ति ते'' इति अवदत् जयशीलः ।

सिद्धसाधकः गुहायाः ऊर्ध्वभागे दृष्टिं प्रसारितवान् । तत्र स्थिताः ते चत्वारः तेनापि दृष्टाः । तेषां वेषभूषादिकं परिशीलितवान् सिद्धसाधकः मकरकेतुं झटिति अभिज्ञातवान् । तत्र स्थितेषु उभौ जयशीलम् अभिज्ञातवन्तौ । तयोः अन्यतरः तु जयशीलं विस्मयेन भयेन च निर्निमेषं पश्यन् आसीत् ।

मकरकेतुः तान् त्रीन् अपि सकृत् दृष्टवान् । सः स्वस्य शरीरं राङ्कवेण सम्यक् आच्छाद्य कृष्णश्मश्रुमन्तं रत्नखचितसुवर्णावरणयुक्तं दण्डं धृतवन्तम् उद्दिश्य अवदत् - ''वैद्यदेव ! जलाश्वस्य उपरि उपविष्टः जनः अस्ति जयशीलः । शूलं धृत्वा तस्य पार्श्वे स्थितः तु सिद्धसाधकः । तृतीयं तु भवान् जानाति एव । सः मम अनुचरेषु अन्यतमः एतस्य सर्पसखस्य सहोदरः'' इति ।

''मम अनुजम् एतस्मिन् जन्मनि सजीवं पश्येयम् इति आशा एव न आसीत् मम'' इति वदन् सर्पसखः अग्रे गन्तुम् उद्युक्तः ।

किन्तु मकरकेतुः क्रोधेन तस्य हस्तं गृहीत्वा तदीयं गमनं निवारितवान् ।

"अये सर्पसख ! भवतः बुद्धिः नष्टा जाता तु न स्यात् खलु ? जयशीलः सिद्धसाधकः च अस्माकं वैरिणौ । तथापि मायासरोवरेश्वरस्य आदेशस्य अनुगुणम् अस्माभिः कपटमैत्री दर्शनीया तेषु । एतदर्थं काऽपि योजना करणीया । योजनासमाप्तितः पूर्वम् एव भवान् तयोः समीपं गच्छति चेत् सर्वं विफलं भवेत् । स्मर्यते खलु एतत् ?" इति अवदत् मकरकेतुः ।



ततः सः सुवर्णदण्डधारिणम् उद्दिश्य अवदत् - "वैद्यदेव ! एतद्विषये भवता स्वस्य आशयः इतोऽपि न उक्तः" इति ।

तदा वैद्यदेवः पर्वतमूलप्रदेशे प्रवर्तमानम् आश्चर्येण पश्यन् एव अवदत् - "मकरकेतो ! तत्र किं प्रवर्तते इति भवता पूर्णतः न लक्षितम् इति भाति । जयशीलस्य खड्गप्रहारं प्राप्य भवतः जलग्रहः अचिरात् एव प्राणान् त्यजेत् अपि" इति ।

तदा मकरकेतुः दीर्घपदानि निक्षिपन् पर्वतमूलं प्रति गन्तुम् उद्युक्तः । अन्ये तम् अनुसृतवन्तः । तेषु पञ्चविंशतिवर्षीयः कश्चन खञ्जः अपि आसीत् । तदीयः वामपादः काष्ठनिर्मितः आसीत् । सः दण्डम् अवलम्ब्य सञ्चरन् मन्दया गत्या पर्वतम् अवतरन् आसीत् ।

नरवानरः जलग्रहस्य प्रहारं प्राप्य भीतः सन् यदा ततः निर्गन्तुम् उद्युक्तः तदा सिद्धसाधकः शूलम् उन्नीय जलग्रहस्य समीपं गतवान् ।

तदा जयशीलः तम् उक्तवान् - "सिद्धसाधक ! इदानीं त्रिभिः जनैः सह आगच्छन् मकरकेतुः सम्मुखीकरणीयः अस्ति । अतः सावधानः भवतु भवान्" इति ।

"जयशील ! जगति कस्माच्चित् अपि भीतिः नास्ति अस्माकम् । महाकालस्य अनुचरात् प्राप्तः महिमान्वितः खड्गः भवतः समीपे अस्ति । अतः मम एतस्य शूलस्य सामर्थ्यं परीक्षणीयं नास्ति एव मया" इति अवदत् सिद्धसाधकः ।

तौ अनुसरन् आगतः सर्पणखः उच्चस्वरेण अवदत् - "मान्यौ ! तं नरवानरं कामं मारयतां तावत् । जलग्रहस्य तु कोऽपि अपायः न स्यात् । जलग्रहस्य स्वामी तु महासत्त्वः पौरुषवान् च" इति ।

"रे ! यं भवान् महासत्त्वं वदति तस्य चर्म

शूलेन अपनीय तं बलिरूपेण अर्पयितुम् उद्युक्तः अस्मि अहम् । स्मरतु एतत् । असम्बद्धस्य प्रलपनं स्थगयतु च'' इति सर्पणखं कोपेन उक्त्वा 'जय महाकाल !' इति जयघोषं सकृत् कृत्वा वेगेन ततः धावितवान् सिद्धसाधकः ।

यावत् सिद्धसाधकः युद्धरतयोः तयोः पश्वोः समीपं गतवान् तावता जयशीलः अपि तत्र उपस्थितः । नरवानरः उन्मुखः सन् भूमौ निश्चेष्टतया पतितः आसीत् । जलग्रहः शुण्डया तं प्रहर्तुं मारयितुं च उद्युक्तः आसीत् । तदा जयशीलः खड्गस्य पृष्ठभागेन तदीयां शुण्डां प्रहृतवान् ।

तदा वेदनां प्राप्तवान् जलग्रहः द्वित्राणि पदानि पृष्ठतः गत्वा जयशीलं ग्रहीतुम् उद्युक्तः । किन्तु तावता एव जयशीलः जलाश्वं किञ्चित् पृष्ठतः नीत्वा उत्कूर्द्य जलग्रहस्य पृष्ठभागे उपविष्टवान् ।

तदा जलग्रहः नरवानरस्य पीडनं विस्मृत्य जयशीलं शुण्डया गृहीत्वा पातनाय प्रयत्नम् आरब्धवान् । तदा जयशीलः वामहस्तेन तदीयां शुण्डां गृहीत्वा दक्षिणहस्तस्थस्य खड्गस्य मूलभागेन गण्डस्थले प्रहृतवान् ।

तावता मकरकेतुः धावन् तत्र आगतः । तं दृष्ट्वा जयशीलः उक्तवान् – ''मकरकेतो ! अहम् आदौ एतस्य जलग्रहस्य संहारं करिष्यामि । ततः भवन्तम् अपि संहरिष्यामि । भवत्कारणतः एव मया मत्सहचारिणा सिद्धसाधकेन चापि अरण्ये अटव्याम् अनेकानि कष्टानि अनुभूतानि'' इति ।

''जयशील ! एषोऽहं नमस्करोमि । कृपया एतस्य जलग्रहस्य वधं मा करोतु । इतः परम् आवयोः मैत्री भवतु । भवान् मायासरोवरं प्रति गमनाय मार्गं खलु इच्छति ? तं मार्गम्



अहं दर्शयिष्यामि । जलग्रहं तु मा पीडयतु कृपया'' इति महता विनयेन प्रार्थितवान् मकरकेतुः ।

एतत् श्रुत्वा जलग्रहात् अवतीर्य अवदत् जयशीलः - ''मायासरोवरं प्रति गमनमात्र मम उद्देशः न । तत्र कनकाक्षराजस्य पुत्रः पुत्री च यौ बन्धने स्तः तौ विमोचनीयौ स्तः मया । अतः भवन्तम् अत्रैव कुत्रचित् गुहायां बन्दिरूपेण स्थापयिष्यामि अहम् । भवान् च कस्यचित् अनुचरस्य द्वारा मायासरोवरेश्वरं प्रति वार्ता प्रेषयतु'' इति ।



मकरकेतुः यावत् किमपि उत्तरं दातुम् उद्युक्तः तावता सिद्धसाधकः 'जय महाकाल' इति जयकारं कृत्वा अवदत् - ''जयशील ! भवता यत् चिन्तितं तदेव युक्तम् । एषः इतः पलायनं यथा न कुर्यात् तथा करणीयम् अस्माभिः । कण्ठस्य अर्धच्छेदः अपि वरम् एव । हस्तौ पादौ चापि बन्धनीयौ । एतस्य सहचराः ये त्रयः सन्ति तान् नरवानरस्य आहारं करवाम'' इति ।

ततः सः नरवानरसमीपं गत्वा तस्य उरसि कर्णं योजयित्वा नाडीं च परीक्ष्य - ''दैवात् एषः न मृतः । एतस्य हृदयम् इतोऽपि स्पन्दते । जलग्रहस्य प्रहारं प्राप्य एषः विसंज्ञः जातः अस्ति, तावदेव'' इति उक्त्वा सर्पणखम् उद्दिश्य - ''अये सर्पणख ! शीघ्रातिशीघ्रं अनतिदूरे स्थितायाः नद्याः समीपं गत्वा वस्त्रम् आर्द्रीकृत्य किञ्चित् जलम् आनयतु तावत्'' इति आदिशत् ।

मकरकेतुः तु निर्भावमुखः सन् इतस्ततः पश्यन् आसीत् । सर्पणखः अनतिदूरे एव स्थितायाः नद्याः समीपं गतवान् ।

सिद्धसाधकः मकरकेतोः समीपं गत्वा - ''मकरकेतो ! भवता सह त्रयः अन्ये सन्ति खलु'' इति उक्त्वा तान् सम्यक् परिशील्य अवदत् - ''अहो, किमेतत् ! भवता सह काष्ठमयपादयुक्तः कश्चित् खञ्जः अपि अस्ति !'' इति ।

''सिद्धसाधक ! एषः खञ्जः जनः वयम् इव न मायासरोवरपरिसरे जातः, प्रत्युतः भवन्तः इव सामान्ये भूप्रदेशे जातः । एषः अपि महाराजस्य कनकाक्षस्य अपत्ययोः अन्वेषणाय एव अरण्यं प्रति आगतः आसीत् । व्याघ्रेण एतदीयः एकः पादः भक्षितः । एतस्य नाम अस्ति मङ्गलवर्मा इति'' इति उत्तरं दत्तवान् मकरकेतुः ।

''अहो, हिरण्यपुरस्य सेनापतेः पुत्रः

मङ्गलवर्मा खलु एषः । जयशीलेन सह स्पर्धमानः व्याघ्रेण सह युद्धाय प्रवृत्तः सन् पराजयं प्राप्य पलायितवान् भीरुः अयम् !'' इति उक्त्वा सिद्धसाधकः जयशीलं पश्यन् पुनः अवदत् - ''जयशील ! किम् एतावता अपि अयं न अभिज्ञातः ? एषः काष्ठमय-पादोपेतः अस्ति मङ्गलवर्मा'' इति ।

जयशीलः तम् इतः पूर्वम् एव अभिज्ञातवान् आसीत् । यं मकरकेतुः 'वैद्यदेव' नाम्ना निर्दिशति स्म तं निर्निमेषदृष्ट्या परिशील्य अभिज्ञाय यावत् सः 'देवशर्मन्' इति सम्बोधयितुम् उद्युक्तः तावता 'वैद्यदेव' नामकः सः जनः अभिनयेन सूचितवान् - 'किमपि अजानन् इव व्यवहरतु कृपया' इति ।

अत्रान्तरे सर्पणखः आर्द्रीकृत्य आनीतं वस्त्रं सिद्धसाधकाय दत्तवान् । तत् निष्पीड्य नरवानरस्य मुखे जलं पातयित्वा स्वस्य आयुधेन द्वित्रवारं लघुप्रहारं दत्त्वा उच्चस्वरेण अवदत् सिद्धसाधकः - ''नरवानर ! भवान् सचेतनो भवतु । न काऽपि आपत्तिः भवतः । सिद्धसाधकस्य मम वचनं कदापि वितथं न भविष्यति'' इति ।

अनन्तरक्षणे एव नरवानरः नेत्रे उन्मीलितवान् । चतसृषु दिक्षु दृष्टिः प्रसारिता तेन । अनतिदूरे नदीतीरे शुण्डाम् उन्नीय स्थितः जलग्रहः दृष्टः तेन । तं दृष्ट्वा क्रोधेन गर्जन् सः उत्थाय अतिष्ठत् ।

सिद्धसाधकः तस्य स्कन्धं गृहीत्वा तदीयं गमनं निवारयन् - ''अये नरवानर ! शान्तो भव । मया भवतः प्राणदानं कृतम् । अतः अद्य आरभ्य भवान् मम सेवकः । एवं ननु ?'' इति वदन् तं कण्ठे द्वित्रवारं मृदुतया प्रहृतवान् ।

नरवानरः क्रोधेन उत्थाय दन्तान् आघर्षयन् सिद्धसाधकं ग्रहीतुम् उद्युक्तः । एतत् अवगतवान् सिद्धसाधकः स्वस्य मुष्ट्या तस्य शिरसि प्रहृतवान् । एतस्मात् महतीं वेदनां प्राप्य नरवानरः भूमौ अपतत् । वेदनापूर्णं ध्वनिं च अकरोत् ।

क्षणकालस्य अनन्तरं सः सिद्धसाधकस्य पादयोः पुरतः नतमस्तकः भूत्वा उपविश्य स्वस्य हस्तौ उन्नीतवान् । एतत् दृष्ट्वा सिद्धसाधकः महता आनन्देन हसितवान् ।

- *(अनुवर्तते)*



# वेताल-कथा

## रामसेनस्य निर्णयः

स्वीकृतं कार्यं त्यक्तुम् अनिच्छन् त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा शाखायां लम्बमानं शवं स्कन्धे आरोप्य यथापूर्वं मौनेन श्मशानं प्रति प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् - ''अये राजन् ! एषः मार्गः सर्पादिभिः क्रूरजन्तुभिः आक्रान्तः अस्ति इति किं भवान् न जानाति ? पिशाच-शृगालादीनां रवः किं न श्रूयते ? किमर्थम् एषः भवतः प्रयत्नः ? अद्यावधि भवता एतादृशे प्रयत्ने साफल्यं तु न सम्पादितम् । अनुचितनिर्णयविषये भवान् रामसेन-सदृशः । सः स्वदेशे उभयोः नगरयोः अधिकारिणोः नियुक्ति-



विषये यं निर्णयं कृतवान् स आसीत् सर्वथा अनुचितः । तेन किं कृतम् इति विस्तरेण श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

रामसेनः प्रमोददेशस्य शासकः । प्रजानां कष्टस्य निवारणम् एव स्वस्य लक्ष्यं भावयति स्म सः । अतः एव प्रजानां हितार्थं तेन बहूनि कार्याणि कृतानि । एतस्मात् प्रजाः लाभं प्राप्नुवत्यः सन्ति उत न इत्यपि सः परिशील-यति स्म गुप्तचराणां द्वारा । कदाचित् सः स्वयमपि छद्मवेषं धृत्वा राज्ये सञ्चरति स्म ।

कदाचित् सः एवं वेषान्तरं धृत्वा भाग्यपुरीं गतवान् । तत्र सः जनानां मुखात् नगराधि-कारिणः दिव्यदत्तस्य प्रशंसां बहुधा श्रुतवान् । एतां श्रुत्वा सः किञ्चित् खिन्नः अपि । 'प्रजाः मम नाम अपि न उच्चारयन्ति, केवलं दिव्य-दत्तस्यैव प्रशंसां कुर्वन्ति' इत्येतत् एव तस्य दुःखस्य कारणम् ।

राजधानीं प्रत्यागतः सः कांश्चन गुप्तचरान् आहूय अवदत् - ''आत्मप्रशंसा श्रोतव्या इति भाग्यपुर्याः अधिकारिणः दिव्यदत्तस्य महती इच्छा इति मन्ये । स्वप्रशंसाश्रवणाय सः राजधनस्य उपयोगं कुर्वन् स्यादपि । अतः भवन्तः गत्वा तस्य व्यवहारस्य दोषान् सम्यक् परिशील्य आगच्छन्तु'' इति ।

गुप्तचराः सप्ताहाभ्यन्तरे एव प्रत्यागत्य अवदन् - ''प्रभो ! दिव्यदत्तः प्रभुभक्ति-परायणः । सः यद्यत् करोति तत्सर्वं भवतः नाम्ना एव करोति । सः प्रजानां हिताय सर्वविधां व्यवस्थां कृतवान् अस्ति स्वनगरे । स्वस्य उत्तमानां गुणानां कारणतः सः लोक-प्रियः जातः । अतः एव जनाः तस्य प्रशंसां कुर्वन्ति बहुधा । सः राजधनस्य एकां वराटिकाम् अपि न व्ययीकृतवान् । धनस्य दुरुपयोगः तेन स्वप्नेऽपि न चिन्तितः'' इति ।

एतस्य श्रवणस्य अनन्तरम् अपि रामसेनः दिव्यदत्तस्य व्यवहारस्य विषये विश्वासं न प्राप्तवान् । दिव्यदत्तः गुप्तचरेभ्यः उत्कोचं दत्त्वा स्वकार्यं साधितवान् स्यादपि इति सन्देहः प्राप्तः तेन । अतः सः दिव्यगुप्तस्य परीक्षणाय वेषान्तरं धृत्वा भाग्यपुरीं गतवान् ।

सः एकस्यां धर्मशालायां वासं कृतवान् । सायङ्काले सः धर्मशालाधिकारिणम् अवदत् - ''महोदय ! मम समीपे शतं दीनाराः सन्ति । रात्रौ नगरे सञ्चारं कृत्वा नगरसौन्दर्यं द्रष्टुम् इच्छामि अहम् । किं भवान् मम धनग्रन्थिं स्वसमीपे स्थापयेत् ?'' इति ।

''दिव्यदत्तः एतस्य नगरस्य अधिकारी अस्ति । अतः अत्र चौर्यं नाम्ना अपि नास्ति । तस्मात् धनग्रन्थिं भवान् स्वीकृत्य अपि गन्तुम् अर्हति । प्रकोष्ठे स्थापयितुम् अपि अर्हति । यदि मया स्थापनीयं तर्हि तदपि मम सम्मतम् एव'' इति अवदत् धर्मशालाधिकारी ।



राजा रामसेनः धनग्रन्थिम् आत्मना सह स्वीकृत्य नगरे अटनाय निर्गतवान् । नगरे या दीपालङ्कारव्यवस्था कृता आसीत् सा हृदयहारिणी आसीत् । नगरे वैद्यशालाः अपि उत्तमाः आसन् । सर्वं दृष्टवतः राज्ञः मनसि दिव्यदत्तस्य विषये आदरः उत्पन्नः । तथापि सुसूक्ष्मं परिशीलनीयम् इति सङ्कल्पितवान् सः ।

सः धनग्रन्थिं कस्मिंश्चित् लघुनि मार्गे स्थापयित्वा अग्रे गन्तुम् उद्युक्तः । तावता पृष्ठभागतः ध्वनिः श्रुतः - ''तिष्ठ'' इति ।

राजा आश्चर्यचकितः सन् मुखं परिवर्त्य दृष्टवान् । तावता कश्चन सैनिकः तस्य समीपम् आगतवान् । सः अपृच्छत् - ''एतं ग्रन्थिं किमर्थम् अत्र स्थापयित्वा पलायनाय उद्युक्तं भवता ? किम् एतस्य अन्तः विषपदार्थः कोऽपि अस्ति ?'' इति

''कः भवान् ? मां प्रष्टुं कः अधिकारः भवतः ? यत् इच्छामि तत् अहं करोमि'' इति मिथ्याकोपं प्रकटयन् उक्तवान् राजा ।

''अहम् अस्मि सैनिकः । कुत्र किं सम्भवेत् इति रहसि स्थित्वा परिशीलनं मम वृत्तिः । अपायात् जनानां रक्षणाय अहं नियुक्तोऽस्मि'' इति अवदत् सैनिकः ।

तदा राजा धावनाय उद्युक्तः । सैनिकः यथा ग्रहीतुं न शक्नुयात् तथा वेगेन धावितवान् सः । सैनिकः अपि तम् अनुसृतवान् । धावतः राज्ञः पादयोः स्खलनं जातम् । अतः सः अधः अपतत् । तस्य शिरसि व्रणः जातः । सः विसंज्ञत्वं प्राप्तवान् ।

सैनिकः उच्चैः सूचनारवं कृतवान् । तस्मात् त्रिचतुराः अन्ये सैनिकाः तत्र उपस्थिताः । ते राजानं चिकित्सालयं नीतवन्तः ।

राजानं परीक्ष्य वैद्यः अवदत् - ''व्रणः तीव्रः अस्ति'' इति । ततः सः पट्टिकाबन्धनादिना राज्ञः चिकित्सां कृतवान् ।

सचेतनतां प्राप्तवान् राजा अवदत् - ''सामान्यस्यापि नागरिकस्य प्राणरक्षणाय अत्र या व्यवस्था अस्ति सा नूनं प्रशंसार्हा । एतां व्यवस्थां यः कल्पितवान् तं दिव्यदत्तम् अदृष्ट्वा अहम् इतः न गच्छामि । तस्य दर्शनात्

एव मम मनसः शान्तिः भवेत्'' इति ।

सैनिकानां द्वारा दिव्यदत्तेन प्रवृत्तं सर्वं ज्ञातम् । सः चिकित्सालयम् आगत्य छद्म-वेषधारिणं राजानम् अपृच्छत् - ''धनग्रन्थिं लघुमार्गे त्यक्त्वा भवान् यत् पलायितवान् तस्य किं कारणम् ?'' इति ।

तदा राजा अवदत् - ''अहम् अस्मि राजा रामसेनः । एतस्मिन् नगरे भवतः शासनं कथं प्रवर्तते इति प्रत्यक्षं ज्ञातुम् अहम् अत्र आगतः । प्रजाहिताय भवान् यत् कार्यं कुर्वन् अस्ति तस्मात् अहं नितरां प्रसन्नः अस्मि । अभिनन्दनार्हः अस्ति भवान्'' इति ।

तदा दिव्यदत्तः राजानं विनयेन नमस्कृत्य अवदत् - ''प्रभो ! भवान् दैवात् रक्षितः इति तु अस्माकं सौभाग्यम् । मम परीक्षणार्थम् उद्युक्तः भवान् प्राणापायं प्राप्तवान् अभविष्यत्'' इति ।

राजा रामसेनः बहुधा तस्य प्रशंसां कृत्वा राजधानीं प्रत्यागतवान् । ततः दिव्यदत्तं राज-धानीं प्रति निमन्त्र्य उपायनैः सत्कृतवान् च । एतत् दृष्ट्वा प्रेरिताः अन्ये नगराधिकारिणः अपि स्वनगरव्यवस्थाम् उत्तमां कर्तुं, राज्ञः सम्मानं प्राप्तुं च सङ्कल्पं कृतवन्तः । सौभाग्य-पुरस्य अधिकारी भव्यवर्मा इच्छति स्म यत् मया अपि राज्ञः प्रशंसा प्राप्तव्या इति ।

भव्यवर्मा विलासप्रियः । जनानां कल्याण-विषये तस्य विशेषासक्तिः न आसीत् । सः राज्ञ्याः बन्धुः आसीत् । अतः अनन्य-गतिकतया राजा तं सौभाग्यपुरस्य अधिकारिणं कृतवान् आसीत् ।

भव्यवर्मा महाराज्ञीं दृष्ट्वा अवदत् - ''मम नगरस्य जनाः सुखेन सन्ति । सर्वविधानि



आनुकूल्यानि अपि सन्ति तत्र । तथापि खेदस्य विषयः नाम – दिव्यदत्तेन यः सम्मानः प्राप्तः सः मया न प्राप्तः । अतः भवती महाराजम् उक्त्वा तद्द्वारा मम नगरस्य दर्शनं कारयतु । तदा मम योग्यता सामर्थ्यं च ज्ञायेत'' इति ।

राज्ञी एतं विषयं राजानम् उक्तवती । तदा राजा अवदत् – ''अस्तु । सप्ताहाभ्यन्तरे अहं तस्य नगरं गमिष्यामि । यदि सः मम आगमनं पूर्वम् एव जानीयात् तर्हि सर्वं व्यवस्थितं कुर्यात् । अतः भवती तं मम आगमनवार्तां मा वदतु'' इति ।

ततः सप्ताहाभ्यन्तरे राजा कञ्चित् सेवकं छद्मवेषधारिणं कृत्वा सौभाग्यपुरं प्रति प्रेषितवान् । ततः सः अपि सामान्यनागरिकवेषं धृत्वा तं सेवकम् अनुसृतवान् । तं सेवकम् एव वेषान्तरं धृतवन्तं महाराजं मन्यमानः भव्यवर्मा तस्य विशेषसत्कारं कृतवान् ।

सः छद्मवेषधारी सेवकः रात्रौ नगरे अटन् मार्गे धनग्रन्थिं स्थापितवान् । तदा नगरस्य सैनिकाः तं प्रहृत्य विसंज्ञं कृतवन्तः । ततः तं चिकित्सालयं नीतवन्तः अपि ।

अत्रान्तरे छद्मवेषधारी राजा अपि विषमज्वरव्याजेन चिकित्सालयम् आगतवान् । किन्तु तत्र कोऽपि तस्य विषये अवधानं न दत्तवान् । सर्वे कर्मचारिणः तस्य विषये अनादरं प्रकटितवन्तः । कश्चन सैनिकः तं मन्दस्वरेण अवदत् – ''एतस्य नगरस्य वैद्यशालासु समर्थः वैद्यः कुत्रापि नास्ति । वैद्यैः प्रतिमासं योग्यं वेतनम् अपि न प्राप्यते इत्यतः ते सर्वे भाग्यपुरीं प्रति गतवन्तः सन्ति । धनवन्तः एव अत्र योग्यां चिकित्सां प्राप्तुम्



अर्हन्ति, न तु सामान्याः । अतः यदि भवतः प्राणाः प्रियाः स्युः तर्हि भवान् झटिति एव भाग्यपुरीं प्रति एव गच्छतु'' इति ।

राजा राजधानीं प्रत्यागत्य राज्ञीं प्रवृत्तं सर्वं निवेद्य अवदत् – ''इदानीं भवत्या एव स्वयं ज्ञातं खलु भव्यवर्मा नगरप्रशासनकार्ये अनर्हः इति । सः सर्वथा असमर्थः । सः भवत्याः बन्धुः । अतः भवती मम आगमनवार्तां तम् उक्तवती स्यात्'' इति ।

तदा राज्ञी आश्चर्यं प्रकटयन्ती अल्पेन कोपेन उक्तवती – ''मया एतादृशं कार्यं किमर्थं क्रियेत ? मम दासीषु काचित् आवयोः सम्भाषणं श्रुतवती स्यात्, तम् उक्तवती स्याच्च । अतः अहं विचारणां करिष्यामि, दोषं कृतवतीं दासीं कशाप्रहारैः सम्यक् दण्डयिष्यामि च'' इति ।

तदा राजा तां सान्त्वयन् अवदत् – ''देवि। अलं तादृशेन कृत्येन । भव्यवर्मा भवत्याः बन्धुः । अतः तस्य हितं काङ्क्षमाणा काचित् दासी भवत्याः प्रशंसाम् अपि प्राप्तुम् इच्छन्ती एतादृशं कार्यं कृतवती स्यात् । अलं गतस्य विषये चिन्तनेन'' इति ।

एतदनन्तरं सः भाग्यपुर्याः अधिकारिणं दिव्यदत्तं सौभाग्यपुरस्य अधिकारित्वेन नियुक्तवान् । सौभाग्यपुरस्य अधिकारिणं भव्यवर्माणं भाग्यपुरीं प्रति प्रेषितवान् च ।

वेतालः एवं कथां समाप्य अवदत् – ''राजन् ! राजा रामसेनः यां नियुक्तिं कृतवान् तस्मात् किं न ज्ञायते यत् तेन भव्यवर्म-दिव्यदत्तयोः शक्तिसामर्थ्यादीनां योग्यं मूल्याङ्कनं न कृतम् इति ? प्रशासनदक्षस्य लोकप्रियस्य दिव्यदत्तस्य सौभाग्यपुराधिकारित्वेन नियुक्तिः, जनकल्याणे अनासक्तस्य, विलासप्रियस्य भव्यवर्मणः भाग्यपुर्यधिकारित्वेन नियुक्तिः च किम् अनुचिता न ? राज्ञः अविवेकितां द्योतयितुं किम् अन्यत् प्रमाणम् आवश्यकम् ? मम एतेषां प्रश्नानां समाधानं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा मौनेन स्थातुम् अशक्तः त्रिविक्रमः अवदत् – ''राजा भाग्यपुर्याः सौभाग्यपुरस्य च हितं मनसि निधाय एव अधिकारिपरिवर्तनं कृतवान् । दीर्घकालं यावत् दिव्यदत्तस्य प्रशासनम् आसीत् इति कारणतः भाग्यपुर्याः जनाः सर्वविधं सुखम् अनुभवन्तः आसन् । ते भव्यवर्मणः विलासजीवनं, प्रजाहितचिन्तने अनासक्तिं च दीर्घकालं यावत् सोढुं न शक्नुयुः । ते राजानं तत्सर्वं वदेयुः एव । तदा भव्यवर्मणः पदच्युतिं कारयितुं स्थितः राज्ञः मार्गः निष्कण्टकः भवेत् । राज्ञी च अनन्यगतिकतया राज्ञः निर्णयम् अङ्गीकुर्यात् । सौभाग्यपुरं प्रतिगतः दिव्यदत्तः तु प्रजानां हिताय विशेषप्रयत्नं कुर्यात् । सौभाग्यपुरम् अपि भाग्यपुरीसदृशं कुर्यात् । एतत्सर्वं मनसि निधाय एव राज्ञा योग्यः निर्णयः कृतः । अतः राज्ञः निर्णये अनौचित्यं लेशमात्रेणापि नास्ति'' इति ।

एवं राजानं कथने प्रवर्तयितुं समर्थः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।






## देवाय केशानां समर्पणम्



किं भवद्भिः तिरुपतिनगरं कदाचित् दृष्टम् ? एतस्मिन् नगरे एकं विलक्षणं दृश्यं दृष्टिगोजरं भवति । मुण्डितशिरस्काः जनाः असङ्ख्याः दृश्यन्ते अत्र । ऐदम्प्राथम्येन अत्र आगताः एतत् दृष्ट्वा आश्चर्यम् अनुभवेयुः । आन्ध्र-तमिळुनाडुप्रभृतिभ्यः राज्येभ्यः एते आगच्छन्ति । मुण्डितशिरस्केषु भवन्ति बालाः, तरुणाः, तरुण्यः अन्यमहिलाः च । एते भगवते स्वकेशान् अर्पितवन्तः सन्तः एवं मुण्डितशिरस्काः भवन्ति । तमिळुनाडुराज्ये जातस्य शिशोः वर्षसमाप्तेः पूर्वं तं तिरुपतिम् अन्यदेवालयं वा नीत्वा तदीयाः केशाः देवाय अर्प्यन्ते । एतस्य केशसमर्पणस्य मूलोद्देशः कः ? कस्यचित् वस्तुनः समर्पणात् अपि स्वस्य केशानां समर्पणम् एव श्रेष्ठम् इति भक्ताः भावयन्ति । केशाः आबालवृद्धं सर्वेषाम् अभिमानावहः विषयः । तस्य समर्पणात् आत्मा एव समर्पितः इव ।

## नैवेद्यरूपेण समर्प्यते मरीचः



पाटलादिपुष्पाणि, अन्यविधानि खाद्यरूपाणि नैवेद्यानि च देवाय समर्प्यन्ते सर्वत्र । किन्तु कोडङ्गल्लूरुनगरे मरीचः अपि समर्प्यते नैवेद्यरूपेण । एतत् नगरं दक्षिणकेरले अस्ति । अत्रत्यायै भद्रकाल्यै अन्यैः वस्तुभिः सह मरीचोऽपि समर्प्यते नैवेद्यरूपेण । काली कृष्णवर्णीया । मरीचः अपि कृष्णवर्णीयः । विषूचिकारोगात् उत्पन्नाः ये कृष्णकिणाः बहूनि वर्षाणि यावत् तिष्ठन्ति तान् निवारयति एषा भद्रकाली इति अस्ति जनानां विश्वासः ।

# अजापुत्रः अहसत् अरोदीत् च

कश्चन धर्मात्मा गृहस्थः एकं यागं कर्तुम् इष्टवान् । 'स च यागः महत् पुण्यं सद्गतिं च दास्यति' इति तस्य विश्वासः आसीत् । यागस्य नियमः आसीत् यत् यः यागं करोति तेन कश्चन अजः बलिरूपेण अर्पणीयः एव इति ।

सः गृहस्य आचार्यः आसीत् । सः स्वस्य शिष्यौ आज्ञापितवान् यत् अत्रत्यस्य धनिकस्य गृहं गत्वा एकम् अजम् आनयतां, सः धनिकः मम भूतपूर्वच्छात्रः अस्ति इति ।

शिष्यौ तथैव कृतवन्तौ । ताभ्यां कश्चन अजः आनीतः ।

अनन्तरदिने प्रातः विविधाः यागविधयः समारब्धाः ।

''अयि शिष्याः ! एतं पर्वतमूलस्थं सरोवरं नीत्वा सम्यक् स्नानं कारयित्वा आनयन्तु । ततः गन्धमाल्यादिभिः एतम् अलङ्कुर्वन्तु । तदनन्तरम् अत्र आनयन्तु'' इति शिष्यान् आदिष्टवान् आचार्यः । एवम् आदिश्य यागस्य अङ्गतया यानि अन्यानि कार्याणि करणीयानि आसन् तेषु व्यापृतः अभवत् सः ।

द्वौ शिष्यौ तम् अजं सरोवरं प्रति नीतवन्तौ । अन्ये शिष्याः तौ अनुसृतवन्तः । ते अरण्ये उपलभ्यमानानि पुष्पाणि अवचित्य अजस्य निमित्तं मालां रचितवन्तः । ततः सरोवरजलेन तैः अजः स्नापितः । स्नानानन्तरं सः अजः तीरं प्रति आनीतः । यदा अजस्य कण्ठे माला स्थापिता तदा आश्चर्यकरी काचित् घटना प्रवृत्ता । स च अजः उच्चैः अहसत् !



अजस्य हासः श्रुतपूर्वः दृष्टपूर्वः वा न आसीत् केनापि । अतः सर्वे शिष्याः आश्चर्येण स्तब्धाः अभवन् । अजः तु तान् निर्निमेष-दृष्ट्या पश्यन् अतिष्ठत् ।

अग्रे किं करणीयम् इति अजानन्तः शिष्याः परस्परं मुखं पश्यन्तः स्थितवन्तः । तावता अपरा आश्चर्यकरी घटना घटिता । एतदवसरे अजः रोदनम् अकरोत् सशब्दम् ।

तदा कश्चन शिष्यः धावन् आचार्यसमीपं गत्वा प्रवृत्तं सर्वं निवेदितवान् । 'एतस्मिन् अजे कश्चन आत्मा आविष्टः स्यात् । अतः एव अजः एवं व्यवहृतवान्' इति स्वगतं वदन् सः अचिन्तयत् - 'एतादृशः अजः यागे बलिरूपेण अर्पयितुम् अर्हः वा न वा इति न ज्ञायते मया' इति । अतः सः शिष्येण सह अजसमीपम् अगच्छत् ।



अजः किञ्चित्कालम् आचार्यं तीक्ष्णदृष्ट्या अपश्यत् । ततः सः मानवस्वरेण - ''भवतः ऊहा युक्ता अस्ति आचार्य ! अहं भवादृशस्य कस्यचित् गृहस्थस्य आत्मा अस्मि, एतस्मिन् अजे आविष्टः अस्मि च । एतत् मया ऐदम्प्राथम्येन कृतं कृत्यं न । इतः पूर्वं नवनवत्युत्तरचतुश्शत(४९९)वारं मया एवं कृतम् । तन्नाम मया नवनवत्युत्तरचतुश्शतम् अजाः प्रविष्टाः इतः पूर्वम्, ये च भवादृशैः पुण्यसम्पादनेच्छुकैः बलिरूपेण समर्पिताः'' इति उक्त्वा - ''मया अजानां शरीरं किमर्थं प्रविश्यते, किमर्थम् अजरूपेण जन्म प्राप्यते इति किं भवान् जानाति ?'' इति अपृच्छत् ।

''न । भवान् एवं किमर्थं करोति इति न ज्ञायते मया'' इति अवदत् आचार्यः ।

''पूर्वम् अहम् अपि भवान् इव कश्चन गृहस्थः आसम् । पुण्यप्राप्तीच्छया भवता इव मया अपि कश्चन यागः कृतः । यागे च कश्चन अजः बलिरूपेण अर्पितः । तस्य फलरूपेण मरणानन्तरं मया पञ्चशतं जन्मानि प्राप्तव्यानि अभवन् । एतत् अस्ति मम अन्तिमं जन्म । तत् स्मरता मया हसितम्'' इति अवदत् अजः ।

''भवता किमर्थं हसितम् इति तु मया ज्ञातम् इदानीम् । किन्तु भवतः रोदनस्य कारणं किम् इति तु मया न ज्ञातम्'' इति अवदत् आचार्यः ।

''रोदनस्य कारणं किं भवता ज्ञातव्यम् एव ? अस्तु, तदपि श्रावयामि । भवतः गतिं स्मरता मया रोदनं प्राप्तम् । मरणानन्तरं भवता अपि पञ्चशतं जन्मानि प्राप्यन्ते अजमारण-

# अजापुत्रः अहसत् अरोदीत् च

कश्चन धर्मात्मा गृहस्थः एकं यागं कर्तुम् इष्टवान् । 'स च यागः मह्यं पुण्यं सद्गतिं च दास्यति' इति तस्य विश्वासः आसीत् । यागस्य नियमः आसीत् यत् यः यागं करोति तेन कश्चन अजः बलिरूपेण अर्पणीयः एव इति ।

सः गृहस्य आचार्यः आसीत् । सः स्वस्य शिष्यौ आज्ञापितवान् यत् अत्रत्यस्य धनिकस्य गृहं गत्वा एकम् अजम् आनयतां, सः धनिकः मम भूतपूर्वच्छात्रः अस्ति इति ।

शिष्यौ तथैव कृतवन्तौ । ताभ्यां कश्चन अजः आनीतः ।

अनन्तरदिने प्रातः विविधाः यागविधयः समारब्धाः ।

''अयि शिष्याः ! एतं पर्वतमूलस्थं सरोवरं नीत्वा सम्यक् स्नानं कारयित्वा आनयन्तु । ततः गन्धमाल्यादिभिः एतम् अलङ्कुर्वन्तु । तदनन्तरम् अत्र आनयन्तु'' इति शिष्यान् आदिष्टवान् आचार्यः । एवम् आदिश्य यागस्य अङ्गतया यानि अन्यानि कार्याणि करणीयानि आसन् तेषु व्यापृतः अभवत् सः ।

द्वौ शिष्यौ तम् अजं सरोवरं प्रति नीतवन्तौ । अन्ये शिष्याः तौ अनुसृतवन्तः । ते अरण्ये उपलभ्यमानानि पुष्पाणि अवचित्य अजस्य निमित्तं मालां रचितवन्तः । ततः सरोवरजलेन तैः अजः स्नापितः । स्नानानन्तरं सः अजः तीरं प्रति आनीतः । यदा अजस्य कण्ठे माला स्थापिता तदा आश्चर्यकरी काचित् घटना प्रवृत्ता । स च अजः उच्चैः अहसत् !



अजस्य हासः श्रुतपूर्वः दृष्टपूर्वः वा न आसीत् केनापि । अतः सर्वे शिष्याः आश्चर्येण स्तब्धाः अभवन् । अजः तु तान् निर्निमेष-दृष्ट्या पश्यन् अतिष्ठत् ।



अग्रे किं करणीयम् इति अजानन्तः शिष्याः परस्परं मुखं पश्यन्तः स्थितवन्तः । तावता अपरा आश्चर्यकरी घटना घटिता । एतदवसरे अजः रोदनम् अकरोत् सशब्दम् ।

तदा कश्चन शिष्यः धावन् आचार्यसमीपं गत्वा प्रवृत्तं सर्वं निवेदितवान् । 'एतस्मिन् अजे कश्चन आत्मा आविष्टः स्यात् । अतः एव अजः एवं व्यवहृतवान्' इति स्वगतं वदन् सः अचिन्तयत् - 'एतादृशः अजः यागे बलिरूपेण अर्पयितुम् अर्हः वा न वा इति न ज्ञायते मया' इति । अतः सः शिष्येण सह अजसमीपम् अगच्छत् ।

अजः किञ्चित्कालम् आचार्यं तीक्ष्णदृष्ट्या अपश्यत् । ततः सः मानवस्वरेण - ''भवतः ऊहा युक्ता अस्ति आचार्य । अहं भवादृशस्य कस्यचित् गृहस्थस्य आत्मा अस्मि, एतस्मिन् अजे आविष्टः अस्मि च । एतत् मया ऐदम्प्राथम्येन कृतं कृत्यं न । इतः पूर्वं नवनवत्युत्तरचतुश्शत(४९९)वारं मया एवं कृतम् । तन्नाम मया नवनवत्युत्तरचतुश्शतम् अजाः प्रविष्टाः इतः पूर्वम्, ये च भवादृशैः पुण्यसम्पादनेच्छुकैः बलिरूपेण समर्पिताः'' इति उक्त्वा - ''मया अजानां शरीरं किमर्थं प्रविश्यते, किमर्थम् अजरूपेण जन्म प्राप्यते इति किं भवान् जानाति ?'' इति अपृच्छत् ।

''न । भवान् एवं किमर्थं करोति इति न ज्ञायते मया'' इति अवदत् आचार्यः ।

''पूर्वम् अहम् अपि भवान् इव कश्चन गृहस्थः आसम् । पुण्यप्राप्तीच्छया भवता इव मया अपि कश्चन यागः कृतः । यागे च कश्चन अजः बलिरूपेण अर्पितः । तस्य फलरूपेण मरणानन्तरं मया पञ्चशतं जन्मानि प्राप्तव्यानि अभवन् । एतत् अस्ति मम अन्तिमं जन्म । तत् स्मरता मया हसितम्'' इति अवदत् अजः ।

''भवता किमर्थं हसितम् इति तु मया ज्ञातम् इदानीम् । किन्तु भवतः रोदनस्य कारणं किम् इति तु मया न ज्ञातम्'' इति अवदत् आचार्यः ।

''रोदनस्य कारणं किं भवता ज्ञातव्यम् एव ? अस्तु, तदपि श्रावयामि । भवतः गतिं स्मरता मया रोदनं प्राप्तम् । मरणानन्तरं भवता अपि पञ्चशतं जन्मानि प्राप्यन्ते अजमारण-

हेतोः । तत् स्मरता मया रोदनं प्राप्तम् । तदस्तु, किं विलम्बेन ? यागस्थलं गच्छाम । शीघ्रातिशीघ्रं भवान् मम शिरः छिनत्तु, येन मया एतस्मात् जन्मतः मुक्तिः ततः सद्गतिः च प्राप्येत'' इति उक्त्वा गमनत्वराम् अदर्शयत् अजः ।

किन्तु तावता आचार्यः बलिरूपेण तस्य अर्पणस्य चिन्तनं सर्वथा परित्यक्तवान् आसीत् ।

सः अजम् अवदत् - ''मित्र ! भवान् अरण्ये स्वेच्छया सञ्चारं कर्तुम् अर्हति । एषोऽहं भवन्तं स्वतन्त्रं करोमि । भवतः प्राणान् अपहर्तुं न इच्छामि अहम्'' इति ।

''न । सर्वथा मास्तु एवम् । मां मारयतु कृपया । यस्मिन् अजे अहम् आविष्टः अस्मि तस्य मारणं कृतं चेत् एव अहं स्वतन्त्रः भवामि । तदा मया पुनः मानवजन्म प्राप्येत । तथा चेत् अजमारणादिकं परित्यज्य लोकोपकारकं किमपि कुर्याम् । अतः विलम्बः मास्तु इति भवन्तं सानुरोधम् अभ्यर्थये'' इति प्रार्थितवान् अजः ।

''नैव । सर्वथा मया तत् न क्रियते'' इति दृढस्वरेण उक्तवान् आचार्यः ।

''भवता न मार्यते चेदपि मम मरणं तु निश्चितम् एव । व्याघ्रखादनात् अन्यप्रकारेण वा अद्य मम मरणं स्यादेव'' इति अवदत् अजः ।

तावता कश्चन झञ्झावातः उत्पन्नः । महान् वायुः सरोवरपरिसरे उत्पातम् अकरोत् । वृक्षाणां शाखाः भग्नाः अभवन् । आचार्यः तच्छिष्याः च आत्मरक्षणाय समीपस्थां गुहाम् आश्रितवन्तः । तेषु सर्वेषु पश्यत्सु एव काचित् तडित् स्फुरिता । तस्याः आघातं प्राप्य अजः मरणम् अवाप्नोत् ।

झञ्झावातस्य अपगमस्य अनन्तरं यदा सर्वे ग्रामं प्रतिनिवर्तमानाः आसन् तदा कश्चन शिष्यः अपृच्छत् - ''आचार्य ! किं यागस्य निमित्तम् अन्यः कश्चन अजः अन्वेष्टव्यः अस्माभिः ?'' इति

''न । अहं यागे पशुबलिं दातुं न इच्छामि । पशुबलिं विना एव यागः परिसमापयिष्यते मया'' इति अवदत् आचार्यः ।



# वार्ताविशेषः

## चर्वणकस्य उपयोगः अनुमतः अंशतः

सिङ्गपुरस्य शासनसभया वर्षद्वयात् पूर्वं चर्वणकस्य (च्यूयिङ्ग् गम्) उपयोगः निषेधितः आसीत् । एषु दिनेषु स च निषेधः अंशतः अपसारितः अस्ति । (न तु पूर्णतः)

सामान्यैः वैद्यैः दन्तचिकित्सकैः च यस्य शर्करारहितस्य चर्वणकस्य उयोगः विधीयते, यच्च औषधापणेषु विक्रीयते, तस्य उपयोगः सर्वकारेण अनुमतः अस्ति । सामान्यस्य चर्वणकस्य उपयोगः मुखे रुधिहानिं जनयति इत्यत्र बहवः विश्वसन्ति तत्र ।

## पत्रलेखने विक्रमः



सर्वासु दिनपत्रिकासु प्रायः वाचकपत्र-विभागः भवति एव । अत्र प्रकाश्यमानानि पत्राणि वाचकैः लिख्यन्ते । तानि भवन्ति वैविध्यमयानि । पत्रिकासु प्रकाशितायाः वार्तायाः विमर्शं कुर्युः कानिचन । आत्मना अनुभूतं कमपि अनुभवं अन्यान् अपि ज्ञापयितुम् इच्छद्भिः लिखितानि भवन्ति कानिचन । हानिकारकान् अपायान् ज्ञापयितुं लिखितानि भवन्ति अन्यानि कानिचन । काश्चन पत्रिकाः तु आक्षेपसूचकानि पत्राणि प्रकाशयितुम् एव स्वतन्त्रं विभागं कल्पयन्ति, येन च शीघ्रपरिहारः भवेत् । देहलीस्थस्य वस्त्रविक्रेतुः सुभाष अगरवालस्य एतादृशानि १२०० पत्राणि विविधासु पत्रिकासु प्रकाशितानि । तस्मात् 'गिन्नीस् बुक् आफ् वर्ल्ड् रेकार्ड्स्' इत्येतस्मिन् पुस्तके तदीयं नाम योजितं जातम् एषु दिनेषु ।



# सुवर्णाण्डदात्री कुक्कुटी

पण्डरपुरनामके ग्रामे धनेशः नाम कश्चन कृषिकः आसीत् । तस्य गोपालः गोविन्दश्चेति उभौ पुत्रौ आस्ताम् । तयोः विवाहः निर्वर्तितः धनेशेन । तदीयं गृहं विशालम् आसीत् । अतः पुत्रस्नुषादयः सर्वे तत्रैव निवसन्ति स्म ।

धनेशस्य अल्पा कृषिभूमिः आसीत् । यदा सः वृद्धः जातः तदा समग्रं गृहव्यवहारं पुत्रयोः अधीनं कृतवान् । गोपालः उषसि एव उत्थाय कृषिभूमौ कार्यं करोति स्म । किन्तु गोविन्दः स्वप्नासक्तः । अतः सः विलम्बेन उत्तिष्ठति स्म ।

गोविन्दस्य पत्नी पत्युः एतं स्वभावं न इच्छति स्म । सा पतिं वदति स्म – ''किमेतत् सर्वदा दिवास्वप्ने निरतता नाम ? क्षेत्रं गत्वा अग्रजस्य साहाय्यं यदि क्रियेत तर्हि वरम् अभविष्यत् खलु ?'' इति ।

तस्याः वचनस्य परिणामः गोविन्दे कोऽपि न जातः । सः निस्सङ्कोचं वदति स्म – ''किमर्थं चिन्ता भवत्याः ? अग्रे कदाचित् सुवर्णाण्डदात्री कादम्बा मया प्राप्येत । तदा परिश्रमेण विना अहं लक्षाधीशः भवेयम्'' इति ।

गोपालस्य तत्पत्न्याः च स्वभावः उत्तमः आसीत् । अतः तौ गोविन्दस्य वचनं महत्त्वपूर्णं न भावयतः स्म । तस्य तादृशात् वचनात् तयोः कापि हानिः अपि न आसीत् ।

एवमेव दिनानि गतानि । अथ कदाचित् कश्चन पुरुषः सायङ्काले गोविन्दस्य गृहम् आगतवान् ।

मञ्चे शयानः गोविन्दः उत्थाय तं पृष्टवान् – ''कः भवान् ? कः द्रष्टव्यः भवता ?'' इति ।

''मम नाम हरिः इति । विशेषकार्यस्य निमित्तं पार्श्वग्रामं गच्छन् अस्मि । रात्रिः आसन्ना अस्ति । अतः अद्य तस्य ग्रामस्य प्राप्तिः कष्टकरी एव । रात्रौ अत्र वासाय

भामहः

यदि भवान् अनुमति दद्यात् तर्हि अहम् उपकृतः भवेयम् । प्रातः अहम् इतः निर्गमिष्यामि'' इति अवदत् हरिः ।

''अस्तु । अत्रैव मञ्चं स्थापयिष्यामि । भुक्त्वा सुखेन शयनं करोतु नाम'' इति उक्त्वा गोविन्दः हरेः निमित्तं मञ्चादिव्यवस्थां कृतवान् ।

भोजनानन्तरं गोविन्देन लक्षितं यत् हरेः समीपे सुवर्णवर्णेन शोभमाना काचित् कुक्कुटी अपि अस्ति इति ।

अतः सः तम् अपृच्छत् - ''किम् एतत् ? एषा कुक्कुटी सुवर्णवर्णेन विराजते खलु !'' इति ।

तदा हरिः अवदत् - ''वस्तुतः एषा कुक्कुटी सुवर्णमयी एव । सुवर्णाण्डं प्रसूते एषा'' इति ।

''किम् उक्तं भवता ? किं कुक्कुटी सुवर्णाण्डं प्रसवितुम् अर्हति कदापि ?'' इति आश्चर्येण अपृच्छत् गोविन्दः ।

तदा हरिः स्वस्य स्यूततः एकं शोभमानम् अण्डं निष्कास्य दर्शयन् अवदत् - ''पश्यतु, एतया कुक्कुट्या प्रसूतम् अण्डम् एतत् । मासे एकवारम् एतादृशम् अण्डं प्रसूते एषा'' इति ।

''किम् एषा कुक्कुटी भवतः एव ? एतां कुत्र नेष्यति भवान् ?'' इति कुतूहलेन पृष्टवान् गोविन्दः ।

''कश्चन मान्त्रिकः मह्यम् एतां कुक्कुटीं दत्तवान् । एतां भोजयितुं मम सामर्थ्यं नास्ति । अतः पार्श्वग्रामे निवसते बान्धवाय विक्रेतुम् एतां नयन् अस्मि'' इति दुःखमिश्रितेन स्वरेण उक्तवान् हरिः । तस्य वचनात् तदीया असहायकस्थितिः स्पष्टतया ज्ञायते स्म ।

गोविन्दः पुनरपि कुतूहलेन पृष्टवान् - ''किम् एतां भोजयितुं भवतः सामर्थ्यं नास्ति ? किम् एषा रत्नं वज्रं वा खादति ?'' इति ।

''तथा तु नास्ति । तथापि एतस्य स्वभावः विलक्षणः । सामान्यः आहारः दत्तः चेत् सामान्यम् अण्डं दीयते अनया । स्वामिना वर्धितं सद्योनिष्पन्नं धान्यं दत्तं चेत् मासे एकवारं सुवर्णाण्डं दास्यति । अहं तु निर्धनः । मम तु





अल्पा अपि कृषिभूमिः नास्ति । अहं किं करवाणि ?'' इति अवदत् हरिः ।

'कथमपि एषा कुक्कुटी मया प्राप्तव्या एव' इति विचिन्त्य गोविन्दः हरेः हस्तौ गृहीत्वा अवदत् - ''मित्र ! मम भ्रातुः एकरचतुष्टयमिता भूमिः अस्ति । तत्र एकरद्वयमिता भूमिः मत्सम्बद्धा । तत्र अहं धान्यं वर्धयित्वा एतां कुक्कुटीम् आतृप्ति भोजयितुं शक्नोमि । अतः एतां मह्यं ददातु'' इति ।

हरिः क्षणकालं विचिन्त्य अवदत् - ''अस्तु, भवतः प्रार्थनां व्यर्थीकर्तुं न इच्छामि अहम् । अतः एतां ददामि भवते । एतस्याः मूल्यम् अद्यैव दातव्यं नास्ति भवता । परिश्रमेण कृषिः क्रियते खलु भवता । तदा यत् धान्यं प्राप्यते तत्र खारीपरिमितं धान्यं मह्यं ददातु । षण्मासानन्तरम् अहं पुनः आगत्य तत् धान्यं नेष्यामि'' इति ।

गोविन्दः महता सन्तोषेण - ''नितराम् उपकृतोऽस्मि मित्र । भवता उक्तं तु अवश्यं दास्यामि'' इति उक्त्वा सः कुक्कुटीं हरेः हस्ततः स्वीकृतवान् ।

तस्मिन् एव दिने सह अग्रजं गोविन्दं दृष्ट्वा स्वकीयं भागं प्रार्थितवान् । ''अहं स्वयं कृषिं करिष्यामि । भवतः साहाय्यं मास्तु मम'' इति अवदत् सः । एतत् श्रुत्वा आश्चर्यचकितः अपि गोपालः विना प्रतिवचनं गोविन्दाय तदीयं भागं दत्तवान् ।

अनन्तरदिनतः गोविन्दः उषसि उत्थानम् आरब्धवान् । सः कृषिक्षेत्रे परिश्रमेण कार्यं करोति स्म । धान्यं कदा प्राप्यते इति प्रतीक्षते स्म सः ।

केचन मासाः अतीताः । कृषिक्षेत्रे धान्यानि सिद्धानि जातानि । एतत् दृष्ट्वा गोविन्दः नितरां सन्तुष्टः । अन्यसाहाय्यं विना एव एषा सिद्धिः प्राप्ता तेन इत्यतः ग्रामीणाः सर्वे तस्य प्रशंसां कृतवन्तः ।

गोविन्दः प्रीत्या कुक्कुट्यै आत्मना वर्धितानि धान्यानि ददाति स्म । कुक्कुटी च महता आनन्देन तानि खादति स्म ।

ततः एकः मासः अतीतः । गोविन्दः अचिन्तयत् - 'एतस्मिन् मासे कुक्कुटी सुवर्णाण्डम् एव प्रसुते' इति । किन्तु तथा तु न जातम् । सा सामान्यम् अण्डम् एव प्रसुते स्म । गोविन्दः तस्यै अधिकानि धान्यानि दत्तवान् । तथापि सा तु सामान्यम् अण्डम् एव ददाति स्म ।

सामान्यानि अण्डानि एव सुवर्णवर्णं

प्राप्नुयुः इति सः अचिन्तयत् । तथा तु न जातम् । तानि भञ्जयित्वा सः परीक्षितवान् । अण्डानाम् अन्तः सुवर्णांशः तु न आसीत् । एतस्मात् सः नितरां खिन्नः । हरेः विषये तस्य क्रोधः आगतः । 'सः मां वञ्चितवान् । अतः योग्येन क्रमेण दण्डयिष्यामि तम्' इति अचिन्तयत् सः ।

तेषु एव दिनेषु हरिः तस्य गृहम् आगतः । सः प्रीत्या अपृच्छत् - ''मित्र ! सर्वं कुशलं खलु ?'' इति ।

तदा गोविन्दः क्रोधमिश्रितेन स्वरेण अवदत् - ''किं कुशलप्रश्नेन ? महावञ्चकः भवान् । भवतः कुक्कुटी सुवर्णाण्डदात्री तु सर्वथा न'' इति ।

तदा हरिः हसन् गोविन्दस्य स्कन्धे हस्तं संस्थाप्य अवदत् - ''मित्र ! मया भवान् न वञ्चितः । एषा कुक्कुटी न मम, अपि तु भवतः । तया सुवर्णाण्डं न दत्तं स्यात् नाम, किन्तु सुवर्णाण्डसदृशी फलसमृद्धिः तु दत्ता एव ! तस्याः कारणतः एव भवान् आलस्यं परित्यज्य क्षेत्रे परिश्रमेण कृषिं कृतवान् । तस्मात् भवतः गृहं धान्यराशिना पूर्णम् अस्ति । एषः धान्यराशिः सुवर्णतुल्यः एव खलु ?'' इति ।

गोविन्दः क्षणकालं मौनेन स्थितवान् आसीत् । ततः सः अवदत् - ''आं हरिवर्य ! भवता युक्तम् उक्तम् । मम गृहे सुवर्णाण्डं न स्यात् नाम, सुवर्णसदृशः धान्यराशिः तु अस्ति । मम दिवास्वप्नशीलतां निवारितवान् भवान् । मम एकः प्रश्नः - भवान् अस्माकं दूरबन्धुः तु न खलु'' इति ।

''न । भवतः बन्धुः न । पार्श्वग्रामे अहम् अध्यापकः अस्मि । इतः ये छात्राः ग्रामीणाः वा तत्र आगच्छन्ति तेषां मुखतः मया भवतः प्रवृत्तिविषयः श्रुतः । यः सुवर्णाण्डदात्र्याः कारण्डायाः विषये स्वप्नं पश्यति तस्मै तादृश्याः एव कुक्कुट्याः दानेन न कापि हानिः इति मया चिन्तितम् । अतः कुक्कुटी एव दत्ता । अपेक्षितं फलं तु सिद्धम् एव'' इति हसन् अवदत् हरिः ।





# वृक्षवासिनी देवी

पारिजातनामकः कल्पवृक्षः देवलोके अस्ति । यत् प्रार्थ्यते तत् ददाति सः । अप्सराः सुनन्दा इच्छति स्म यत् देवेन्द्रस्य पत्नी भविष्यामि इति । स्वस्य इच्छां पूरयितुं सा कदाचित् कल्पवृक्षसमीपं गतवती । परन्तु वृक्षस्य अधः यदा स्थितं तदा तया स्वस्य इच्छा न स्मृता । वृक्षात् यदा दूरं गम्यते तदा इच्छा स्मृतिपथम् आयाति स्म । एवम् अनेकवारं प्रवृत्तम् । अन्ते सा वृक्षम् उद्दिश्य उक्तवती – ''हे वृक्ष, भवत्समीपे आगमन-समये एव मम इच्छा विस्मृता भवति । अतः भवान् तादृशेन वरेण माम् अनुगृह्णातु येन अहं स्वस्य इच्छां स्मर्तुं शक्नुयाम्'' इति ।

''एतत् न शक्यते । यतः वरदानं तु भगवतः कार्यम् । यत् प्रार्थ्यते तस्य दानमात्रं मम कर्तव्यम्'' इति पारिजातवृक्षेण कथितम् ।

''तर्हि अहं किं करोमि ? यदा वृक्षतलम् आगम्यते, तदा इच्छा विस्मर्यते । किमर्थम् एवं भवति ? मम इच्छायाः पूरणस्य उपायः कः ?'' इति सुनन्दा दीनस्वरेण पृष्टवती ।

तदा पारिजातः अवदत् – ''भवत्याः इच्छा का इति अहं जानामि । अतः एव ताम् अहं विस्मारयन्ती अस्मि । भवती कस्याश्चित् पतिव्रतायाः पत्युः पत्नी भवितुम् इच्छति । एषा इच्छा नितराम् अनुचिता । अन्यत् किमपि पृच्छतु । अवश्यं तत् पूरयिष्यामि'' इति ।

एतत् श्रुत्वा सुनन्दा क्रोधेन – ''कीदृशः वृक्षः भवान् ! इच्छां विस्मारयतः भवतः विषये किमर्थम् आदरः प्रकटनीयः मया ? धिक् त्वाम्'' इति वदन्ती वृक्षस्य एकां शाखां बलात् आकृष्य भञ्जितवती ।

तदा पारिजातः अपि क्रोधेन अवदत् – ''भवत्या मम शाखा उत्पाटिता । अतः भवत्यै शापं ददामि । इदानीम् आरभ्य भवत्याः

वासः भूलोके भविष्यति । तत्र भवती तादृशे वृक्षे आश्रयं प्राप्स्यति, यस्य च शाखाः उत्पाटिताः भवेयुः'' इति ।

शापवाक्यस्य श्रवणात् सुनन्दा नितरां भीता । सा खेदमिश्रितेन स्वरेण उक्तवती - ''भवत्तलम् आगता अहं भवतः कारणतः एव इच्छां विस्मरामि स्म । एवं मयि विस्मृतिं जनयितुं भवान् शक्तवान् । किन्तु क्रोधस्य निग्रहणे तु साहाय्यं न कृतं भवता । यदि भवान् तत् साहाय्यम् अकरिष्यत् तर्हि अहं भवतः शाखां न उत्पाटयेयम् । मया यः दोषः कृतः तत्र भवतः अपि पात्रम् अस्ति । एवं स्थिते अपि मया दण्डनम् अनुभूयते यत् तत् किम् उचितम् ?'' इति ।



''भगवान् इच्छति यत् कल्पवृक्षेण सता मया उत्तमानि कार्याणि करणीयानि इति । अन्येषाम् इच्छायाः नियन्त्रणस्य सामर्थ्यं मह्यं न दत्तं तेन । अतः एतद्विषये अहम् असहाया । भवत्या मम शाखा उत्पाटिता खलु ? शाखायाः उत्पाटनात् वृक्षस्य कियती वेदना भवति इति न जानाति भवती । अन्ये अपि एतत् न जानन्ति । मम ललाटे यत् लिखितम् आसीत् तदनुगुणं मया वेदना अनुभूता । इतः परं भवत्या अपि तादृशं कष्टम् अनुभोक्तव्यम् । अतः मया एतादृशः शापः दत्तः । शापः तु अनुभोक्तव्यः एव भवत्या'' इति अवदत् पारिजातः ।

शापस्य अनुभवात् ऋते अन्यः मार्गः नास्ति इति ज्ञातवती सुनन्दा पारिजातं दैन्येन प्रार्थितवती - ''भूलोके वसन्त्याः अपि मम शक्तयः यथा लुप्ताः न भवेयुः तथा वरं ददातु कृपया'' इति ।

''तथैव भवतु । भूलोके वसन्त्याः भवत्याः शक्तयः विनष्टाः न भविष्यन्ति । किन्तु तासाम् उपयोगः तु परोपकाराय एव भवितुम् अर्हति, न अन्यकार्यनिमित्तम्'' इति अवदत् पारिजातः ।

अनन्तरक्षणे एव सुनन्दा भूलोकं गतवती । कस्यचित् गृहस्य पृष्ठतः स्थितः वृक्षः तस्याः निवासस्थानं जातम् ।

कदाचित् तस्य गृहस्य स्वामी कोदण्डरामः वृक्षस्य समीपम् आगत्य बलात् एकां शाखाम् उत्पाटितवान् । तदा हस्तभङ्गं प्राप्तवती इव महतीं वेदनाम् अनुभूतवती सुनन्दा । तस्याः मुखतः वेदनासूचकः ध्वनिः निर्गतः ।

एतं ध्वनिं श्रुत्वा कोदण्डरामः क्षणकालम् आश्चर्यचकितः भीतः च । सः निर्निमेषदृष्ट्या



वृक्षं पश्यन् अतिष्ठत् ।

''मया भवद्विषये किम् अपराद्धम् ? विना कारणं किमर्थं भवता शाखा खण्डिता ?'' इति कोपेन पृष्टवती वृक्षस्था सुनन्दा ।

तदा कोदण्डरामेण उक्तम् - ''गृहे पाकाय काष्ठानि न सन्ति । विपणितः क्रेतुं मम समीपे धनं नास्ति । अतः अनन्यगतिकतया मया शाखा कर्तिता'' इति ।

तदा सुनन्दा प्रत्यक्षीभूय - ''एषः वृक्षः आ बहोः कालतः मानवसेवां कुर्वन् अस्ति । भगवतः प्रियः एषः । अतः एव एतस्य साहाय्याय भगवान् मां प्रेषितवान् । अहम् एतस्मिन् वृक्षे निवसामि । अग्रे कदापि भवता कस्यापि वृक्षस्य अपकारः न करणीयः, अहितं च न चिन्तनीयम् । यदि भवान् किमपि इच्छति तर्हि मां प्रार्थयतु । अहं दास्यामि'' इति उक्त्वा एकां चुल्लीं सृष्ट्वा तस्मै दत्तवती ।

तस्याः चुल्लेः वैशिष्ट्यं यत् यदा कोदण्डरामः इच्छति तदा सा अग्निं निस्सारयति स्म, यदा न इष्यते तदा अग्निः निर्विण्णः भवति स्म । एतां चुल्लीं स्वीकृत्य गृहं गतः कोदण्डरामः चतुर्णां दिनानाम् अनन्तरं पुनरपि वृक्षसमीपम् आगतः । एतदवसरे तस्य हस्ते परशुः आसीत् ।

एतत् दृष्ट्वा नितरां भीता सुनन्दा आगमनकारणं पृष्टवती । तदा कोदण्डरामः अवदत् - ''मम माता नितराम् अस्वस्था अस्ति । तस्याः चिकित्सार्थं वैद्यः प्रभूतं धनम् इच्छति । इदानीं गृहविक्रयणात् ऋते मम नास्ति अन्यः कोऽपि मार्गः । गृहस्य क्रेता गृहस्य पृष्ठतः वृक्षस्य स्थितिम् अशुभकरं मन्यते । अतः अहम् इदानीम् एतं वृक्षं समूलम् उत्पाटयितुम् आगतः अस्मि'' इति । एतावत् उक्त्वा सः वृक्षच्छेदनाय परशुम् उन्नीतवान् ।

तदा सुनन्दा तस्य एतं प्रयत्नं निवारयन्ती उक्तवती - ''भवान् स्वस्य मातरम् एतस्य

वृक्षस्य अधः द्वित्राणि दिनानि शाययतु । तस्मात् सा स्वस्था भविष्यति । मम वचने विश्वासं करोतु'' इति ।

कोदण्डरामः सुनन्दया यथा उक्तं तथा कृतवान् । दिनद्वयाभ्यन्तरे तस्य माता स्वस्था जाता । अतः तद्गृहजनाः सर्वे तस्य वृक्षस्य पूजाम् आरब्धवन्तः । यत् प्रार्थ्यते तत् दीयते स्म तेन वृक्षेण । अतः तस्य वृक्षस्य नाम 'कल्पवृक्षः' इत्येव जातम् । कोदण्डरामः एतस्य वृक्षस्य पूजनात् एव स्वस्य सर्वाः इच्छाः पूरयति इति यदा ग्रामीणैः ज्ञातं तदा ते अपि तं वृक्षं पूजयित्वा इष्टार्थं सम्प्रार्थ्य सफल-मनोरथाः अभवन् ।

एवं वृक्षस्था देवी बहूनां मनोरथान् पूरितवती । जनाः वृक्षाणां पीडनं यथा न कुर्युः तथा कर्तुं तया विविधाः मार्गाः उक्ताः । तेषां दैनन्दिनावश्यकतानां पूरणाय अपि तया उपायाः सूचिताः । जनानाम् अस्वास्थ्यं दूरीकृतम् । तथापि ये तस्याः समीपम् आगच्छन्ति स्म तेषु बहवः परेषां पीडनम् एव इच्छन्ति स्म आधिक्येन । किन्तु तादृशीः इच्छाः न पूरयति स्म सुनन्दा । सा तान् बोधयति स्म यत् एतादृशः मार्गः परि-त्यक्तव्यः, दुष्टाः विचाराः मनसि न स्थापनीयाः इति । ये तस्याः बोधनं न इच्छन्ति स्म ते अपप्रचारं कुर्वन्ति स्म यत् समस्ताः इच्छाः पूरयितुं वृक्षस्य सामर्थ्यं नास्ति इति ।

यदा एतत् ज्ञातं तदा सुनन्दा पारिजातवृक्षं प्रार्थितवती – ''हे पारिजातवृक्ष ! आगन्तूणां मनसि कीदृशी इच्छा भवति इति यथा ज्ञायेत तथा वरं ददातु कृपया । यदि कस्यचित् मनसि दुष्टा इच्छा स्यात् तर्हि सः ताम् इच्छां यथा विस्मरेत् तथा कर्तुं शक्तिं ददातु'' इति ।

तदा सुनन्दायाः कर्णयोः पारिजातवृक्षस्य ध्वनिः प्रतिध्वनितः जातः – ''इदानीं ज्ञानोदयः जातः भवत्याः । या वृक्षजातिः भवत्याः आश्रयः आसीत् तस्याः उपकारः कृतः चेत् भवती शापात् मुक्ता भविष्यति'' इति ।

कल्पवृक्षस्य वचनं श्रुत्वा सुनन्दा नितरां सन्तुष्टा । याः शक्तयः परोपकाराय स्युः ताः सर्वाः शक्तीः सा विविधासु वृक्षजातिषु वितीर्य शापात् मुक्तिं प्राप्य देवलोकं प्रतिगतवती ।

ततः आरभ्य वृक्षाः देवतात्वं प्राप्य विविधैः उपकारैः मानवानां साहाय्यं कुर्वन्तः सन्ति ।



# अरुणाचलप्रदेशीया जानपदकथा

भारतस्य उत्तरपूर्वदिशि स्थितेषु राज्येषु बृहत्तमः अस्ति अरुणाचलप्रदेशः । यत्र पर्वते प्राथम्येन अरुणोदयः भवति सः भवति 'अरुणाचलः' । एतस्य उत्तरभागे हिमाच्छन्नाः पर्वताः सन्ति आधिक्येन । दक्षिणभागे च भवति ब्रह्मपुत्रखातसम्बद्धः विशालः भूभागः ।

१९८७तमे वर्षे फेब्रवरीमासस्य २०तमे दिनाङ्के अरुणाचलप्रदेशः 'राज्य'त्वम् अवाप्नोत् । अन्ताराष्ट्रिया दीर्घा सीमा भवति एतस्मिन् राज्ये । एतस्य पश्चिमभागे भूतानदेशः, उत्तरभागे उत्तरपूर्वभागे च चीनादेशः, पूर्वभागे मायन्मारदेशः च सन्ति । असाम-नागाल्याण्डराज्ययोः सीमा अपि अस्ति एतस्य एकस्मिन् पार्श्वे ।

एतस्य विस्तीर्णता अस्ति ८३,७४३ किलोमीटर्परिमिता । अत्रत्या जनसङ्ख्या १०,९१,१७७ मिता । एतस्मिन् राज्ये प्रामुख्येन पञ्चनदीखाताः सन्ति । अत्र पर्वताः वनारण्यानि चापि सन्ति ।

एतस्मिन् राज्ये विंशत्यधिकाः अनुसूचितजातयः, अनेकाः उपोनुसूचितजातयः च सन्ति । एकैका अपि जातिः स्वकीयं वैशिष्ट्यं वहति एव । एकैकस्याः अपि जातेः एकैका भाषा भवति ।

एतस्य राज्यस्य राजधानी अस्ति - इटानगरम् ।

## अपायात् रक्षणम्

निशिङ्गनामके ग्रामे उभौ सहोदरौ आस्ताम् । ज्येष्ठस्य नाम निमः इति, कनिष्ठस्य नाम न्योयः इति । अन्ये बालाः इव तौ उभौ अपि उत्साहशीलौ ।

कदाचित् तयोः पितरौ मृगयार्थम् अरण्यं गतौ आस्ताम् । तत्समये राक्षसः अप्पापिल्लिः वेणुमयं कूटयन्त्रं स्वीकृत्य वराहाणां ग्रहणाय तद्गृहसमीपम् आगतवान् ।

तदा तस्य दृष्टिः गृहाङ्गणे क्रीडतोः एतयोः बालयोः उपरि पतिता । 'अहो, एतौ पक्त्वा



रुचियुक्तं पाकं सज्जीकर्तुं शक्यते' इति सः अचिन्तयत् । 'प्रतिवेशिनः अपि यथा न जानीयुः-तथा उपायेन एतौ ग्रहीतव्यौ मया' इति विचिन्त्य सः एकां योजनाम् अकरोत् । 'बालाः कदलीफलं प्रायः इच्छन्ति एव' इत्येतत् स्मरन् सः समीपस्थात् वृक्षात् कानिचन कदलीफलानि उत्पाट्य वेणुमये कूटयन्त्रे स्थापयित्वा गृहसमीपं गतवान् ।

नीमन्योयौ दृष्ट्वा सः मन्दहासपूर्वकम् अवदत् - "वत्सौ ! अहम् अस्मि भवतोः मातुलः । भवतोः निमित्तं मया किमपि आनीतम् अस्ति" इति ।

नीमः अचिन्तयत् - 'एतादृशः महाकारकः कुरूपः मम मातुलः भवितुं न अर्हति' इति । किन्तु निष्कपटः न्योयः अप्पापिल्लेः वञ्चना-व्यवहारम् अजानन् द्वारम् उद्घाट्य - "अस्माकं निमित्तं किम् आनीतं भवता ?" इति अपृच्छत् ।

अप्पापिल्लिः कूटयन्त्रस्य द्वारम् उद्घाट्य - "अन्तः पश्यतु तावत् । स्वादूनि कदली-फलानि आनीतानि मया । एतानि भवतः प्रियाणि खलु ?" इति अवदत् ।

कदलीफलानि दृष्ट्वा नितरां सन्तुष्टः न्योयः उत्साहेन कूटयन्त्रं प्रविष्टवान् । किं करणीयम् इति नीमः क्षणकालम् अचिन्तयत् । कदली-फलानि तस्मिन् खादनेच्छाम् उदबोधयन् । अतः सः अपि अनुजम् अनुसृतवान् । यदा तौ अन्तः गतवन्तौ तदा अप्पापिल्लिः - "हा, लब्धौ खलु भवन्तौ !" इति वदन् उच्चैः हसन् कूटयन्त्रस्य द्वारं पिहितवान् ।

ततः सः पर्वतं प्रत्यागतवान् । तत्र गुहायां



तस्य वासः । सः पत्नीं महता सन्तोषेण अवदत् - "भोः ! चुल्लेः उपरि कटाहं संस्थाप्य अग्निं प्रवर्तयतु शीघ्रम् । अद्य अस्माकं भविष्यति स्वादु भोजनम्" इति ।

राक्षसस्य पत्नी तौ दृष्ट्वा क्रियमाणं कार्यं तथैव परित्यज्य महता आनन्देन कटाहं चुल्लेः उपरि संस्थाप्य तं जलेन पूरितवती । कटाहस्य अधः अग्निः अपि स्थापितः । अप्पापिल्लिः बालौ कूटयन्त्रात् कटाहे अपातयत् ।

निमः न्योयः च तरणं जानीतः स्म । अतः तौ कटाहस्थे जले निमग्नौ तु न जातौ । तौ प्लवमानौ अतिष्ठताम् । "भोः, जलं क्वथति वा इति परिशीलयतु" इति पत्नीम् अवदत् अप्पापिल्लिः । एतत् श्रुतं निमेन । झटिति तस्य मनसि कश्चन उपायः स्फुरितः । सः न्योयेन

सह कटाहस्य तलं प्राप्य तत्रैव तरणं कुर्वन् श्वासम् अत्यजत् । तस्मात् जलस्य ऊर्ध्वभागे बुद्बुदाः दृष्टाः । तान् दृष्ट्वा मूर्खा राक्षसी चिन्तितवती यत् जलं क्वथति इति ।

''भवतः भोजनम् अचिरात् एव सिद्धं भविष्यति । जलं क्वथति । तस्मात् मांसं मृदु भविष्यति'' इति पतिम् उक्तवती सा ।

ततः अप्पापिल्लिः तत्पत्नी च पाणिपादं प्रक्षालयितुं गृहात् बहिः गतवन्तौ । एतत् ज्ञातवन्तौ नेमः न्योयः च कटाहात् उत्प्लुत्य बहिः आगत्य अनतिदूरे शयानौ उभौ राक्षस-शिशू दृष्टवन्तौ । तौ उन्नीय कटाहे पातितवन्तौ नेमः न्योयः च । एतावता जलम् उष्णम् जातम् आसीत् इत्यतः सशब्दं क्वथनम् अपि श्रुतम् ।

''न्योय ! धावतु । यावत् एतौ राक्षसौ आवयोः पलायनं न जानीतः ततः पूर्वम् एव आवाभ्याम् इतः निर्गन्तव्यम्'' इति अवदत्



नेमः । ततः तौ अरण्यस्थां नदीम् उद्दिश्य धावनम् आरब्धवन्तौ ।

पाणिपादं प्रक्षाल्य गुहायाः अन्तः आगतवन्तौ अप्पापिल्लिः तत्पत्नी च । तावता ताभ्यां शिशोः क्रन्दनं श्रुतम् । यदा ताभ्यां कटाहे दृष्टिः प्रसारिता तदा तत्र आत्मनः पुत्रयोः एव शवः ताभ्यां दृष्टः ।

अप्पापिल्लेः पत्नी अश्रूणि स्रावयन्ती पुत्रयोः शवं कटाहात् बहिः आनीय भूमौ स्थापयित्वा - ''अयि बालौ ! भवतोः शरीरं पक्वं जातम् इव । यदि क्रन्दनं किञ्चित् श्रुतं न स्यात् तर्हि आवां भवन्तौ अखादिष्याव अपि'' इति सगद्गदम् अवदत् ।

ततः सा पतिम् उद्दिश्य क्रोधेन अवदत् - ''ताभ्यां दुष्टाभ्यां बालाभ्याम् एव एतत् दुष्कार्यं कृतम् । अतः तौ बालौ गृहीत्वा पक्त्वा खादनीयौ, प्रतीकारः च साधनीयः एव । तस्मात् आगच्छतु भवान् मया सह'' इति ।

गुहातः बहिः बालयोः पादचिह्नानि आसन् एव । तानि अभिजानन्तौ अप्पापिल्लिः तत्पत्नी च तौ अनुसृतवन्तौ ।

तौ बालयोः समीपम् आगतवन्तौ । तावता बालौ नदीतीरं प्राप्तवन्तौ आस्ताम् । राक्षसयोः आगमनं ज्ञात्वा नेमः न्योयम् अवदत् - ''भोः, झटिति वृक्षम् आरोहतु । अन्यथा तौ आवां ग्रहीष्यतः'' इति । ततः तौ वृक्षम् आरुह्य उपविष्टवन्तौ ।

राक्षसौ वृक्षसमीपम् आगतौ । वृक्षस्य उपरि स्थितौ बालौ दृष्टौ ताभ्याम् । ''आरोहतु । वृक्षम् आरुह्य तौ गृह्णातु'' इति पतिं सूचितवती



# करकौशलवस्तूनि

अरुणाचलप्रदेशे करकौशलसम्बद्धानां व्यूतिसम्बद्धानां च उत्तमा परम्परा अस्ति । वेणुवेत्रादिभिः अत्र विविधानि वस्तूनि निर्मीयन्ते । तानि यथा - पीठोपकरणानि, शिरस्त्राणि, कण्डोलादीनि च । शिरस्त्रादीनां विन्यासः, तदुपरि चित्रितानि चित्राणि च अनुसूचितजात्यनुगुणं भिद्यन्ते ।

अरुणाचलप्रदेशे मणिभिः तृणैः च रचितानि आभरणानि अपि उपलभ्यन्ते बहुधा । कण्ठहारः, केयूरः, कटिपट्टिका, कर्णाभूषिका इत्यादयः रेखागणितीयैः आकारैः उपेताः मणिनिर्मिताः प्राप्यन्ते अत्र । एते पुरुषैः महिलाभिः वा धर्तुं शक्याः । तृणमयः कण्ठहारः तु महिलाभिः धर्तुं योग्यः । यत् तृणम् आभरणादिनिमित्तम् उपयुज्यते तत् भवति वेणुजातीयकं, सप्टम्बर्-फेब्रवरी-मासयोः मध्यभागे नदीतीरादिषु वर्धमानं च ।

वस्त्रवयनविन्यासस्य आश्रयभूमिः अपि अस्ति अरुणाचलप्रदेशः । अत्र याः २० अनुसूचितजातयः, शताधिकाः उपानुसूचितजातयः च सन्ति ताः पार्थक्येन एव वस्त्रवयनपरम्परां वहन्ति । कटनिर्माणं स्यूतनिर्माणं चापि प्रचलति एतस्मिन् राज्ये ।

राक्षसी ।

''अहं वृक्षारोहणं सर्वथा न जानामि खलु ? तथापि अलं चिन्तया । अहं तौ एव वृक्षारोहणरहस्यं पृच्छामि । कदाचित् तत् रहस्यम् उद्घाट्येत तयोः अन्यतरेण'' इति पत्नीम् उक्त्वा अप्पापिह्लिः बालौ उद्दिश्य उच्चस्वरेण - ''अहो ! वृक्षारोहणचातुरी भवतोः ! अल्पौ भवन्तौ कथम् एतम् उन्नतं वृक्षम् आरूढवन्तौ ? साधु साधु !'' इति प्रशंसां कृत्वा - ''एतत् कौशलं भवन्तौ कः बोधितवान् ?'' इति अपृच्छत् प्रीतिं वर्धयन् इव ।

''पितामहः'' इति अवदत् न्योयः । नेमः तु मुखं पिधाय मौनेन उपविष्टवान् आसीत् ।

''साधु साधु ! भवन्तौ तेन बोधितं सम्यक् अवगतवन्तौ वा न वा इति परीक्षितुम् इच्छामि अहम् । वृक्षप्रकाण्डे मसृणे सत्यपि कथं वा वृक्षम् आरोढुं शक्तं भवद्भ्याम् ?'' इति अपृच्छत् अप्पापिह्लिः ।

''तत् तु न कष्टाय । वृक्षं परितः स्थिताः लताः पश्यतु तावत्'' इति उत्साहेन अवदत् न्योयः । नेमः यावत् न्योयस्य कथनं निवारयितुम् उद्युक्तः ततः पूर्वम् एव न्योयेन रहस्यं प्रकाशितम् आसीत् । वस्तुतः तु ताभ्यां लतासाहाय्येन एव वृक्षः आरूढः आसीत् ।

अप्पापिह्लिः तं वृक्षं परिशीलनदृष्ट्या अपश्यत् । वृक्षं परितः लताः तेन लक्षिताः ''अहो, हो, सर्वं ज्ञातं मया । इदानीम् एषोऽहं

यदा पतनशब्दः श्रुतः तदा पत्युः आज्ञां पालयितुं सिद्धा सती स्थितवती राक्षसी बलात् तस्य कण्ठभागं परशुना प्रहृतवती एव । तदा 'हा हन्त !' इति राक्षसः उच्चैः क्रन्दनम् अकरोत् । तस्य कण्ठध्वनिः तावत् उग्रः आसीत् यत् तस्य ध्वनेः कारणतः भूमिः अपि कम्पिता जाता । अप्पापिल्लिः दृढकायः राक्षसः । सामान्येन कारणेन सः मृतः भवितुं न अर्हति । अतः पत्न्या कृतं परशुप्रहारं प्राप्य



भवन्तौ ग्रहीष्यामि'' इति अट्टहासपूर्वकम् अवदत् राक्षसः ।

ततः सः पत्नीम् अवदत् - ''अहं वृक्षम् आरुह्य तौ बालौ अधः पातयिष्यामि । पतनशब्दश्रवणसमनन्तरम् एव परशुना तयोः शिरच्छेदः करणीयः भवत्या । एतदवसरे तौ कथमपि पलायितौ न स्याताम्'' इति ।

एतत् अङ्गीकृत्य राक्षसी परशुम् उन्नीय कर्तनाय सिद्धा सती स्थितवती ।

अत्रान्तरे नेमः कञ्चित् आत्मरक्षणोपायं चिन्तितवान् आसीत् । तस्य कोषे काचित् लघुच्छुरिका आसीत् । तया सः वृक्षस्य कर्तनम् आरब्धवान् । अप्पापिल्लिः लतायाः साहाय्येन यदा वृक्षस्य मध्यभागम् आगतवान् तदा लता छिन्ना जाता । अतः उच्चैः आक्रन्दनं कुर्वन् अप्पापिल्लिः भूमौ अपतत् ।

# नृत्यानि

अनुसूचितजातीयानां जीवने नृत्यं विशेष-प्राधान्यम् आवहति । अत्रत्याः प्रमुखेषु पर्वदिनेषु, साम्प्रदायिकेषु उत्सवेषु, क्वचित् मनोरञ्जनकार्यक्रमेषु च नृत्यं कुर्वन्ति । जातयः यथा विभिन्नाः तथैव नृत्यप्रकाराः अपि विभिन्नाः अत्र । वाञ्चो-नोक्टस्प्रभृतीनां जातीनां नृत्यानि प्राधान्येन साम्प्रदायिकानि भवन्ति । बुद्धजीवन-सम्बद्धानि नाटकीयानि तानि नृत्यानि सैन्यस्य पदविन्यासम् एव अनुकुर्वन्ति इव ।

एतेषु सर्वेषु नृत्येषु पुरुषाः महिलाः चापि भागं वोढुम् अर्हन्ति । एतानि नृत्यानि प्रायः भवन्ति सामूहिकानि । किन्तु कासुचित् साम्प्रदायिकेषु नृत्यप्रकारेषु महिलाः भागं वोढुं न अर्हन्ति । सिंह-चमरी-मयूरादिसम्बद्धानि नृत्यानि भवन्ति अत्र । सामान्यतः नृत्यसमये गीतानि भवन्ति । तानि च गीतानि सामूहिकानि भवन्ति प्रायः ।

अपि सः न मृतः ।

भूमौ पतितवता तेन नक्षत्राणि दृष्टानि । भूमेः भ्रमणम् अपि अनुभूतम् इव । शिरोभ्रमणं प्राप्तं तेन । द्वित्रिक्षणानन्तरं सः मन्दम् उत्थाय उपविष्टवान् ।

तस्य कण्ठे जातात् व्रणात् रक्तं स्रवति स्म । रक्तस्रावम् अपि अपरिगणयन् सः झटिति उत्थाय पत्न्याः हस्तात् परशुम् आकृष्य स्वीकृत्य – ''भवन्तौ अद्य ग्रहीष्यामि एव'' इति क्रोधेन वदन् परशुना वृक्षच्छेदनम् आरब्धवान् एव ।

''नेम ! आवयोः अन्तिमः क्षणः सन्निहितः । इदानीम् आवां मरणं प्राप्स्यावः एव'' इति रुदन् अवदत् न्योयः ।

किन्तु नेमः धैर्यच्युतः न जातः । ''भोः, अलं रोदनेन । उत्तमजनानां प्राणहानिं भगवान् न सहते । आवाभ्यां किमपि पापं न कृतम् । अतः आवां वृक्षदेवं नदीदेवीं च प्राणरक्षणाय प्रार्थयाव'' इति अनुजम् उक्तवान् नेमः ।

ततः तौ उच्चैः प्रार्थनां कृतवन्तौ । अप्पापिल्लेः परशुप्रहारतः वृक्षः भृशम् अकम्पत । तयोः प्रार्थना व्यर्था न जाता । अप्पापिल्लिना कर्तितः वृक्षः बालाभ्यां सह नद्याम् अपतत् । वेगयुक्तः नदीप्रवाहः तं वृक्षं वेगेन अग्रे अनयत् । तस्मात् तीरं प्रति वृक्षम् आक्रष्टुं कृतः अप्पापिल्लेः प्रयासः व्यर्थः जातः । एवं तौ बालौ अप्पापिल्लितः आत्मानं रक्षन्तौ सकुशलं गृहं प्राप्तवन्तौ ।



## नैसर्गिकी सम्पत्

अरुणाचलप्रदेशः प्राकृतिकसम्पत्तेः शेवधिः इति भाव्यते । विविधानां फलजातीनां वनस्पतिजातीनां च आकरभूमिः अस्ति एतत् राज्यम् ।

अरुणाचलप्रदेशे घनारण्यानि बहूनि । अरण्येषु वन्यसम्पत्तिः जैविकसम्पत्तिः च आधिक्येन भवति एव खलु ? पञ्चसहस्राधिकाः (५०००) सस्यजातयः, ८५ विधाः खनिजपदार्थाः, पञ्चशताधिकाः पक्षिजातयः, असङ्ख्याः पतङ्गाः सरीसृपकीटजातयः च उपलभ्यन्ते अत्र ।

समग्रम् एतत् राज्यं पर्वतानां समुच्चयः इव एव अस्ति । अत्र ५० मीटरुन्नताः पर्वताः यथा, तथैव ७००० मीटरुन्नताः पर्वताः अपि सन्ति । एतेभ्यः पर्वतेभ्यः झर्यः, नद्यः च उद्भूत्य प्रवहन्ति ।

# भारतम् अवगम्यताम्

*यदि भवन्तः पठनप्रवृत्तिमन्तः स्युः तर्हि पुराणेतिहासादिषु पठिताः कथाः स्मरेयुः एव । कथासु निरूपिताः घटनाः कदाचित् स्मृतिपथे तिष्ठेयुः । किन्तु व्यक्तिनामानि, स्थलनामानि च विस्मृतानि भवेयुः । अतः एतस्मिन् मासे पुराणेतिहासादिसम्बद्धानां व्यक्तिस्थलादीनां स्मारणाय केचन प्रश्नाः सज्जीकृताः सन्ति अत्र । तेषाम् उत्तराणि लिखन्तु एकत्र । अग्रे यदा उत्तराणि प्रकाशयिष्यन्ते तदा तैः सह भवदीयानि उत्तराणि तोलयन्तु ।*

१. सप्त चिरञ्जीविनः के ?

२. देवानां कोषाध्यक्षः कः ?

३. सूर्यस्य पत्न्याः नाम किम् ?

४. गणेशः कार्त्तिकेयः च मातुः सकाशात् किमपि इच्छतः स्म स्पर्धासमये । मातुः हस्ते स्थितं तत् किम् ?

५. महाभारतकथायां श्रूयमाणा सत्यवती धीवरकन्या । तस्याः नाम्ना सम्बद्धौ स्तः कौचित् पितापुत्रौ । तौ च कौ ?

६. बालः भरतः सिंहशावकैः सह क्रीडति स्म इति श्रूयते । तस्य अपरम् अपि किञ्चन नाम आसीत् । तत् किम् ?

७. अर्जुनः यदा भीष्मम् उद्दिश्य महास्त्रं प्रयुज्य स्वयं च कस्यचित् पृष्ठतः स्थितवान्, येन च भीष्मः प्रतिक्रियां कामपि दर्शयितुं न शक्तः । सः पुरुषः कः ?

८. काकुत्स्थः त्रिशङ्कुः अम्बरीषः - इत्येतैः त्रिभिः अपि अभिसम्बद्धः अंशः कः ?

९. पृथायाः अन्यत् जनप्रियं नामान्तरम् अस्ति । तत् किम् ?

*(उत्तराणि अग्रिमे मासे)*

## *'फेब्रवरी'मासस्य प्रश्नानाम् उत्तराणि*

*१. १९५१तमे वर्षे नवदेहल्याम् ।*

*२. 'अप्पु'नामकः गजः ।*

*३. चान्दरामः । १ घण्टा, २९ निमेषाः २९ कलाश्च आवश्यकाः अभवन् ।*

*४. अष्टवारम् । १९२८, १९३२, १९३६, १९४८, १९५२, १९५६, १९६४, १९८० इत्येतेषु वर्षेषु ।*

*५. पि.टि. उषा ।*

*६. कमलजीत् सन्धुः ।*

*७. अ) महिला क्रिकेट् आ) अन्ताराज्यीया पादकन्दुकस्पर्धा, इ) गाल्फक्रीडा ।*

*८. अ) मिल्का सिङ्ग् आ) सुनील् गावस्कर् इ) ध्यानचन्दः ।*

*९. मिहिरसेनः १९५८तमे वर्षे । अट्लाण्टिक्तः फेसिफिक्सागरपर्यन्तां पनामाकुल्यां तरणेन अतिक्रान्तवान् प्रथमः अमेरिकेतरः सः ।*

*१०. प्रकाशपडुकोणे । १६ वयसि ।*

*११. हिमाचलप्रदेशे शिम्लासमीपे 'चैल्' इत्यत्र ।*



# विघ्नेश्वरः

नारदस्य वचनानुसारं पाण्डवाः विघ्नेश्वरस्य पूजां कृतवन्तः । धौम्यमुनेः पौरोहित्ये ते गणेशव्रतम् आचरितवन्तः । विराटराजस्य आस्थाने अज्ञातवासं समापितवन्तः ते स्ववेषादिकं परिवर्तितवन्तः ।

श्रीकृष्णस्य साहाय्येन पाण्डवाः कौरवैः सह युद्धं कृत्वा विजयं प्राप्तवन्तः । हस्तिनापुरे युधिष्ठिरस्य पट्टाभिषेकः जातः । अनन्तरदिनेषु ते अश्वमेधयागं कर्तुं निश्चितवन्तः ।

यज्ञस्य अश्वेन सह सैन्यं स्वीकृत्य अर्जुनः प्रस्थितवान् । पाण्डवानां पुरोहितः धौम्यः अपि तेन सह प्रस्थितः । यज्ञाश्वः बहून् देशान् प्रति नीतः । केचन राजानः युधिष्ठिरस्य शासनम् अङ्गीकृत्य तस्य सामन्ताः जाताः । अग्रे गच्छन् अश्वः एकस्मिन् स्थले अतिष्ठत् । अर्जुनः आश्चर्यचकितः जातः । सः अश्वस्थगनस्य कारणं पुरोहितं धौम्यम् अपृच्छत् । धौम्यः 'भवन्तः अग्रे चलन्तु । अहं तस्य कारणं वदिष्यामि' इति संज्ञया सूचयन् अग्रे गतः । अर्जुनः सैन्येन सह तस्य पृष्ठतः अगच्छत् । किञ्चिद्दूरं गमनस्य अनन्तरम् एकं महत् नगरं दृष्टम् । तस्य नगरस्य मध्ये विघ्नेश्वरस्य विशालमूर्तिः आसीत् । सा मूर्तिः पर्वतीयशिलायाम् उत्कीर्णा आसीत् । तस्याः मूर्तेः सौन्दर्यं तु अत्यपूर्वम् आसीत् ।

धौम्यः अर्जुनम् उक्तवान् - ''हे अर्जुन ! एतस्य विघ्नेश्वरस्य पूजाम् अर्चनां च करोतु । तदनन्तरं वातापिगणपतिरूपेण प्रसिद्धायाः देवतायाः, वातापिनगरस्य च कथाम् अहं श्रावयामि'' इति ।



अर्जुनः वातापिगणपतेः आराधनं भक्तिपूर्वकं कृतवान् । ततः धौम्यः वातापिनगरं प्रति प्रस्थितवान् । अर्जुनः अपि तेन सह गत्वा नगरं दृष्टवान् । पूर्वं यथा, तथैव अधुना अपि तस्य वैभवं रक्षितम् आसीत् । परन्तु केनापि तत् नगरं सम्यक् न परिपालितम् इति कारणतः निर्जनप्रदेशः जातम् आसीत् तत् । ये जनाः तत्र वसन्ति स्म ते अर्जुनस्य आगमनात् परमसन्तुष्टाः जाताः । ते तं निवेदितवन्तः यत् शासनव्यवस्थां सम्यक् कृत्वा एतस्य पुनरुद्धारं करोतु इति ।

''अर्जुन ! एतदेव वातापिनगरं नाम । एतस्य नगरस्य मध्ये या विघ्नेश्वरस्य प्रतिमा अस्ति सा महामुनिना अगस्त्येन स्थापिता । एतस्याः प्रतिमायाः कारणतः वातापिगणपतितीर्थरूपेण एतत् क्षेत्रं प्रसिद्धं जातम् अस्ति । एतस्य विशेषता तावत् श्रूयताम्'' इति उक्त्वा धौम्यः वृत्तान्तकथनम् आरब्धवान् -

कवेरनामकस्य राजर्षेः कमण्डलौ बद्धा गङ्गानदी कावेरीरूपं धृत्वा तस्य आश्रमे वर्धमाना आसीत् । अगस्त्यः तां दृष्ट्वा आकृष्टः जातः । 'एताम् अहं वृणोमि' इति सः स्वस्य इच्छां प्रकटितवान् ।

तदा कवेरः स्वसम्मतिं प्रकटयन् उक्तवान् - ''अगस्त्य ! कावेर्याः अभिप्रायः अपि ज्ञातव्यः खलु ?'' इति ।

अगस्त्यः तस्मिन् आश्रमे कावेर्या सह स्नेहेन व्यवहरति स्म । एकस्मिन् दिने कावेरी तस्य समीपे स्वस्य इच्छां प्रकटितवती यत् अहं सह्यपर्वते विहारं कर्तुम् इच्छामि इति । अतः अगस्त्यः तां सह्याद्रिं प्रति नीतवान् ।

वनविहारसमये कस्मिंश्चित् लघुसरोवरे विद्यमानं कमलं दृष्ट्वा नितराम् आकृष्टा कावेरी तं सरोवरं प्राप्तवती । तत्र जलस्पर्शनसमये झटिति एव सा कावेरी जलरूपं प्राप्तवती । ततः सा कावेरीनदीरूपेण सह्याद्रितः गता ।

तदनन्तरम् अगस्त्यमुनिः बहुकालं यावत् तस्याः स्मरणमेव कुर्वन् ब्रह्मचर्यम् आचरितवान् । महता तपसा सः महर्षिः सञ्जातः । कदाचित् अरण्ये वृक्षशाखायाम् अधोमुखतया लम्बमानान् पितॄन् दृष्ट्वा सः तान् पृष्टवान् - ''भवन्तः के ? भवताम् एतस्याः अवस्थायाः कारणं किम् ?'' इति ।

तदा ते उक्तवन्तः - ''अस्माकं वंशे जातः अगस्त्यः यावत् गृहस्थाश्रमं स्वीकृत्य सन्तानवान् न भविष्यति तावत् अस्माभिः एवमेव स्थातव्यं भविष्यति'' इति ।

एतत् श्रुतवान् अगस्त्यमहर्षिः स्वस्य दिव्य-

दृष्ट्या ज्ञातवान् यत् विदर्भराजस्य कुले कावेर्याः अंशेन युक्ता काचित् कन्या लोपामुद्रा-नाम्ना वर्धमाना अस्ति इति । अतः सः विदर्भ-देशं गत्वा राजानम् उक्तवान् यत् अहं लोपामुद्रां परिणेतुम् इच्छामि इति ।

एतत् श्रुत्वा राजा चिन्तां प्राप्तवान् - 'कोमलस्वभावा मम पुत्री कन्दमूलफलादीनि खादतः अरण्ये सञ्चरतः एतस्य परिणयतः कथं वा सुखं प्राप्तुं शक्नुयात् ? यदि निराकृतिम् अहं प्रदर्शयेयं तर्हि एषः मुनिः कोपेन शापं दद्यात् । इदानीं किं करणीयं मया ?' इति ।

तदा लोपामुद्रा उक्तवती - ''तात ! विना चिन्तां भवान् अगस्त्येन सह मम विवाहं निर्वर्तयतु'' इति ।

एतदनन्तरं विदर्भराजः अगस्त्यलोपा-मुद्रयोः विवाहं निर्वर्त्य अगस्त्येन सह पुत्रीं प्रेषितवान् । आश्रमप्राप्त्यनन्तरं कदाचित् अगस्त्यः लोपामुद्राम् उक्तवान् - ''पुन्नाम्नः नरकात् पितॄन् तारयितुम् एव अहं भवतीं परिणीतवान्'' इति ।

तदा लोपामुद्रा स्वस्य मलिनां शाटिकां दर्शयित्वा दुःखेन उक्तवती - ''मम परिणय-मात्रेण भवतः कर्तव्यं समाप्तं न भवति । अहं राजकुले जन्म प्राप्य राजकुमारी इव प्रवृद्धा । तदनुगुणं वस्त्राणाम् आभरणानां च दानं भवतः कर्तव्यम् । एतदर्थं यत् धनम् आवश्यकं तस्य सम्पादनं भवतः उत्तर-दायित्वम्'' इति ।

अगस्त्यः पत्न्याः वचनस्य अवितथताम् अवगच्छन् धनसम्पादनाय ततः निर्गतवान् ।



सः राज्ञः दृष्ट्वा उक्तवान् यत् राज्यशासनाय यावत् आवश्यकं तावतः धनस्य व्ययी-करणानन्तरं यावत् अवशिष्यते तावत् मह्यं यच्छन्तु इति । तदा राजानः उक्तवन्तः यत् शासनभारनिर्वहणाय एव अस्माकं कृते धनम् अपर्याप्तं भवति, अतः अधिकधनस्य अर्जनाय भवान् एव मार्गं दर्शयतु इति ।

एतत् श्रुत्वा अगस्त्यः महतीं निराशतां प्राप्तवान् । एतम् एव विषयं चिन्तयन् यदा सः अरण्यमार्गेण गच्छन् आसीत् तदा विघ्नेश्वरप्रतिमारूपिणी काचित् शिला तेन दृष्टा । तां महाशिलाम् एव विघ्नेश्वरं मत्वा अगस्त्यः भक्त्या प्रणम्य प्रार्थितवान् - ''हे देव ! तपस्यायाः ऋते अन्यत् किमपि अहं न जानामि । अतः धनसम्पादनकौशलं मयि नास्ति । एवं स्थिते मया कथं वा धनं प्राप्येत ? एतद्विषये भवान् एव कमपि मार्गम् उपदिशतु

कृपया'' इति ।

तदा विघ्नेश्वरः तत्र प्रत्यक्षीभूय उक्तवान् - ''महर्षे ! भवान् तु शिलां स्वस्य कष्टं निवेदयन् अस्ति'' इति ।

तदा अगस्त्यः तं प्रणम्य स्वस्य समस्यां निवेदितवान् । एतत् श्रुत्वा प्रसन्नवदनः विघ्नेश्वरः अवदत् - ''महामुने ! भवान् योग्यम् एव स्थलं प्राप्तवान् अस्ति । इतः अल्पे एव काले इल्वलनामकः कश्चित् भोजनाय भवन्तं निमन्त्रयति । भवान् तेन सह गच्छतु । तस्य गृहे महती सम्पत्तिः अस्ति । तां प्राप्तुं भवान् प्रयत्नं करोतु । भवद्द्वारा अपरम् अपि लोकोपकारकं कार्यं प्रवर्तताम्'' इति ।

''देव ! एषा महाशिला एव भवतः दर्शनस्य कारणम् अस्ति । अतः एषा शिला महिमान्विता सती भवत्प्रतिमारूपेण परिवर्तताम् इति मम अपेक्षा । कृपया एतां पूरयतु'' इति प्रार्थितवान् अगस्त्यः ।

''भवतः इच्छा पूर्णा भविष्यति'' इति उक्त्वा गणपतिः अदृश्यः जातः ।

अगस्त्यः निरन्तरप्रयाणात् नितरां श्रान्तः आसीत् । महती बुभुक्षा अपि तं बाधते स्म । अतः सः विश्रान्त्यर्थं तस्याः शिलायाः पार्श्वे उपविष्टवान् । तदा अतिथिभिः सह आगच्छन् इल्वलः तेन दृष्टः । तं दृष्टवता अगस्त्येन सर्वोऽपि वृत्तान्तः अवगतः ।

वातापिः इल्वलश्चेति उभौ राक्षसौ तस्मिन् अरण्ये निवसतः स्म । मुनीन् प्रयाणिकान् च संहृत्य तौ प्राप्तं धनं शिलागुहायां सङ्गृहीतः स्म । इल्वलः धर्मात्मा इव वेषं धृत्वा आतिथ्यव्याजेन जनान् निमन्त्रयति स्म । तान् सत्कृत्य मधुरैः वचनैः वशीकृत्य यदा सः वार्तालापं



कुर्वन् भवति स्म तदा वातापिः अजरूपेण परिवर्तते स्म । इल्वलः तं मारयित्वा तदीयेन मांसेन पाकं कृत्वा अतिथिभ्यः ददाति स्म ।

अतिथयः भोजनं समाप्य यदा विश्रान्तिसुखम् अनुभवन्ति स्म तदा इल्वलः आह्वयति स्म – 'वातापे' इति । तदा वातापिः तेषाम् उदराणि भित्त्वा बहिः आगच्छति स्म ।

एतयोः दुष्टयोः व्यवहारं ज्ञात्वा अगस्त्यः नितरां क्रुद्धः ।

अगस्त्यस्य दर्शनात् इल्वलः अचिन्तयत् यत् एषः कश्चन महर्षिः एव स्यात् इति । 'एतादृशस्य संहारात् महान् आनन्दः प्राप्यते' इति चिन्तयन् सः अगस्त्यसमीपं गत्वा तं भोजनाय निमन्त्रितवान् ।



अगस्त्यः महतीं बुभुक्षाम् अनुभवन् इव – ''हे धर्मात्मन् ! भवादृशः जनः एतस्मिन् भूमण्डले अस्तीत्यतः एव एषा पृथिवी जीवति'' इति उक्त्वा इल्वलेन सह तदीयं दुर्गं प्रति गतवान् ।

दुर्गं प्राप्य सः अवदत् – ''हे अन्नदातः ! अहम् आ बहुभ्यः दिनेभ्यः बुभुक्षितः अस्मि । एषा बुभुक्षा मया सोढुम् अशक्या अस्ति । मया सहस्राधिकाः यागाः कृताः । अतः अजमांसात् ऋते अन्यत् किमपि जीर्णीकर्तुं न शक्नोमि अहम् एषु दिनेषु । अतः उत्तमेन अजमांसेन यदि भवान् मम निमित्तं भोजनं सज्जीकुर्यात् तर्हि अहं नितराम् उपकृतः भवेयम्'' इति ।

एतत् श्रुत्वा महता सन्तोषेण इल्वलः अवदत् – ''ऋषिवर ! भवादृशस्य निमित्तम् एव आ बहोः कालतः मया कश्चन अजः पालितः अस्ति । अहं तस्य मांसेन पाकं कारयिष्यामि । तदा तु पाकस्य रुचिः अवर्णनीया भवेत्'' इति । ततः सः अजरूपेण स्थितं वातापिं दर्शितवान् ।

''अहो, अपूर्वः अजः एषः ! मया सहस्राधिकाः यागाः कारिताः । किन्तु कुत्रापि एतादृशः अजः तु न दृष्टः । अतः एतस्य वपया उत्तममांसेन च पाकं कारयतु । मम भोजनानन्तरम् एव अन्ये अतिथयः भोजनं कुर्वन्तु । मया पूर्वम् एव उक्तम् एव यत् मांसात् ऋते अन्यत् किमपि न सेव्यते मया इति । यावत् इच्छामि तावत् भोजनं दातव्यं भवता'' इति अवदत् अगस्त्यः ।

एतदनन्तरम् इल्वलः अजमांसेन पाकं कारयित्वा अगस्त्याय परिवेषितवान् । यदा अजमांसेन कृतः पाकः समाप्तः तदा अगस्त्यः तृप्त्या उद्गिरणं कृतवान् ।

एतत् दृष्ट्वा आश्चर्यं भीतिं च अनुभवन् इल्वलः अगस्त्यं पृष्टवान् – ''श्रीमन् ! भवान् महाघनपाठी इव लक्ष्यते'' इति ।

तदा अगस्त्यः हसन् अवदत् – ''आम् । अहं महाघनपाठी इति त्रिषु अपि लोकेषु सर्वे जानन्ति । किञ्चित् मद्यम् अपि आनाययतु तावत्'' इति ।

''किं भवान् मद्यपानम् अपि करोति ?'' इति आश्चर्येण पृष्टवान् इल्वलः ।

''किं मद्यं, समुद्रम् अपि अहं पिबेयम्'' इति उक्तवान् अगस्त्यः ।

''अस्तु नाम । क्षणं प्रतीक्षताम् । अस्माकं वातापिः तत् आनेष्यति'' इति उक्त्वा सः आहूतवान् – ''वातापे !'' इति ।

तदा अगस्त्यः मन्दस्वरेण – ''इतः परं वातापिः अत्र न भविष्यति'' इति उक्त्वा – ''वातापे ! जीर्णो भव !'' इति उदरम् आमृशन् अवदत् – ''वातापिस्तु मम उदरे जीर्णतां गतः'' इति ।

एतत् श्रुत्वा इल्वलः कम्पमानः ततः पलायितवान् । एवं वातापील्वलयोः जनहत्यारूपं मायानाटकं समाप्तं जातम् ।

एतदनन्तरम् अगस्त्यः अतिथीन् प्रवृत्तं सर्वम् उक्त्वा दुर्गे पर्वताकारेण स्थितं अस्थिकपालादीनां राशिं दर्शितवान् । तत् दृष्ट्वा भीताः ते अतिथयः अगस्त्यस्य पादौ गृहीत्वा प्राणदानं प्रार्थितवन्तः ।

अगस्त्यः तत्र स्थितं धनराशिं दृष्टवान् । आत्मनः कृते यावत् आवश्यकं तावत् धनं स्वीकृत्य सः अचिन्तयत् यत् अत्रत्येन धनेन महानगरम् एव निर्मातुं शक्यते इति । अतः सः धनस्य वितरणम् आरब्धवान् । समीपे स्थितेभ्यः राज्येभ्यः आगताः जनाः तस्मात् धनं प्राप्य तत्रैव वासम् अपि आरब्धवन्तः । तत्रैव तेषां वासः स्थिरः जातः ।

अगस्त्येन विघ्नेश्वराकारिका महाशिला या दृष्टा तां परितः एकं महानगरम् एव निर्मितं जातम् । वातापेः जीर्णीभवनात् तत् नगरं निर्मितम् इत्यतः तस्य नाम 'वातापिनगरम्' इत्येव जातम् । अगस्त्यः शासनसूत्राणि शिलालेखरूपेण लेखयित्वा ताः शिलाः नगरे प्रतिष्ठापितवान् । तत्र जनाः एव शासकाः आसन् । आदर्शरूपम् एकं जनताराज्यं तत्र प्रतिष्ठापितम् अभवत् ।



# रहस्यगर्भं स्थलं मणिकरन्

हिमालयः रहस्यगर्भः पर्वतः । अत्र भवन्ति हिमाच्छन्नाः उपत्यकाः, गभीराः खाताः, कुटिलगत्या प्रवहन्त्यः नद्यः, द्रष्टॄणां चित्तम् आकर्षन्ति विविधानि रमणीयानि स्थलानि च । अत्रत्यः कुलुखातः रजतखातत्वेन देवभूमित्वेन च निर्दिश्यते । परिसरप्रियाणां तु



नयनोत्सवं जनयति एषः खातः । एतस्मिन् एव खाते अस्ति मणिकरन्प्रदेशः अपि । एषः प्रदेशः हिमाचलप्रदेशराज्ये अस्ति ।

मणिकरन्प्रदेशः समुद्रस्तरतः १७३७ मीटरुन्नते प्रदेशे अस्ति । अत्रत्याः उत्साः नितरां प्रसिद्धाः । 'पार्वती'नद्याः तीरे अस्ति एतत् स्थलम् । एतेषु उत्सेषु स्नानं कृतं चेत् विविधाः व्याधयः अपगच्छन्ति इत्यस्ति जनानां विश्वासः । अत्र शिलानां मध्यतः उष्णजलं निस्सारयन्ति केचन उत्साः । एवं निर्गच्छतः जलस्य उष्णता ८८° से. - ९५° से. भवति । तन्नाम तस्य जलस्य औष्ण्यं तावत् भवति यत् तस्मिन् जले स्थापितः तण्डुलः विंशतिनिमेषाभ्यन्तरे पक्वः भवति !!

भूगर्भशास्त्रज्ञाः वदन्ति - ''एतेषु उत्सेषु यत् जलं प्रवहति तस्मिन् युरेनियंद्रव्यस्य अन्येषां विकरणशीलद्रव्याणां च विलयनं जातं दृश्यते'' इति । मणिकरन्प्रदेशः सिक्खमतीयानाम् अन्यहिन्दुजनानां च कृते पवित्रं स्थानम् अपि अस्ति । प्रथमः सिक्खगुरुः गुरुनानकः यदत्र आगतवान् आसीत् तस्य संस्मरणाय गुरुद्वारम् एकं निर्मितम् अस्ति अत्र । पञ्चदशे शतके निर्मितं रघुनाथमन्दिरम् अपि अत्र अस्ति । एतत् मन्दिरं लक्षशः भक्तान् आकर्षति ।

## प्राप्तिमार्गः

कुलूतः ४५ कि.मी.दूरे अस्ति मणिकरन् । यानमार्गमात्रेण एव एतत् स्थलं प्रति गन्तुं शक्यम् । समीपस्थं विमानस्थानकं 'भुन्तार'(कुलू)नामकम्, यच्च ३५ कि. मी. दूरे अस्ति ।

# मिस्किनस्य दौर्भाग्यम्

पुरा पर्शियादेशे मिस्किननामकः कश्चित् काष्ठविक्रेता आसीत् । सः श्रमशीलः । तथापि तस्य वेतनं पत्नीपुत्र्योः पालनार्थम् अपि अपर्याप्तम् एव । अतः महता कष्टेन जीवनं यापयति स्म सः ।

कदाचित् मिस्किनस्य पुत्री यास्मिना क्षुधया पीडिता सती एकाकिनी उपविष्टा आसीत् । तदा पार्श्वगृहे कृतस्य मांसपाकस्य गन्धः सर्वत्र प्रसृतः । गन्धस्य आस्वादनेन अस्याः बुभुक्षा इतोऽपि अधिका जाता । तदा तया चिन्तितम् – 'तेषां भोजनसमये यदि अहं गच्छेयं तर्हि ते अवश्यं मह्यम् अपि किञ्चित् मांसं दद्युः ' इति ।

मनसि उत्पन्नाम् एताम् इच्छां निग्रहीतुम् अशक्ता सा तथैव कृतवती । प्रतिवेशिनां भोजनसमये द्वारसमीपे स्थित्वा उक्तवती – 'आर्ये ! चुल्ली ज्वालनीया अस्ति । अतः किञ्चित् अङ्गारं ददातु कृपया'' इति ।

एतत् श्रुत्वा तद्गृहस्य स्वामिनी कुपिता अभवत् । विना वचनम् एकं दहत् काष्ठं तस्याः हस्ते दत्त्वा सा अन्तः गतवती ।



एतस्मात् यास्मिना यद्यपि खिन्ना, तथापि पूर्णतया निराशा तु न सञ्जाता । क्षणकालस्य अनन्तरं सा पुनः द्वारताडनं कुर्वती – ''भवत्या दत्ते काष्ठे स्थितः अग्निः वायुकारणात् निर्विण्णः जातः । अतः पुनरेकं ज्वलत् काष्ठं ददातु कृपया'' इति उक्तवती ।

''अग्निः पवित्रः । अतः तस्य निर्वापणं न करणीयम् । किम् एतावदपि न जानाति भवती ? वस्तुतः भवती अग्निनिमित्तं न आगता, प्रत्युत मया सज्जीकृतं खाद्यं खादितुम् इच्छन्ती आगता । सर्वं जानामि अहम्'' इति वदन्ती अपरं ज्वलत् काष्ठं पुनः आनीय तस्यै दत्त्वा सशब्दं द्वारं पिहितवती ।

यास्मिना अनया घटनया नितरां दुःखिता अभवत् । प्रतिवेशिन्या कृतेन अपमानेन सा बहुधा खिन्ना । सायं गृहं प्रत्यागतः पिता तस्याः दुःखस्य कारणं पृष्टवान् । तदा प्रवृत्तं सर्वं वदन्ती सा पुनः घटनायाः स्मरणेन उच्चैः रुदितवती ।

''वत्से ! मा रुद । श्वः अहं बहूनि काष्ठानि सङ्गृह्य तेषां विक्रयणेन अधिकं धनं सम्पादयिष्यामि । तेन मांसम् आनीय भवत्याः मातरं – 'खाद्यं कृत्वा ददातु' इति सूचयिष्यामि । अलं चिन्तया'' इति वदन् पिता तां समाश्वासितवान् ।

परेद्यवि उषःकाले एव गृहतः प्रस्थाय मिस्किनः अरण्यं गतः । किन्तु तद्दिने तेन एकमपि काष्ठं न लब्धम् । दावानलः सर्वत्र व्याप्य समग्रम् अरण्यमेव दहन् आसीत् । रिक्तहस्तः सन् सः गृहं प्रत्यागतः । गृहे सर्वे यवागूं निपीय निद्रिताः ।

चतुर्णां दिनानाम् अनन्तरं मिस्किनः – 'अद्य कथमपि अधिकानि काष्ठानि सङ्ग्रहणीयानि एव' इति निश्चित्य अरण्यं गतः । सायङ्कालः आसन्नः चेदपि तेन एकमपि काष्ठं न प्राप्तम् । 'गृहे पत्नीपुत्र्यौ मम निरीक्षणे एव स्तः' इति स्मरतः तस्य मनः नितरां व्याकुलितम् अभवत् । दुःखेन तस्य नेत्राभ्याम् अश्रूणि निर्गतानि ।

तस्मिन् एव अवसरे केचन दिव्यपुरुषाः आकाशमार्गेण गच्छन्तः आसन् । तेषु अन्यतमेन याजादनामकेन अस्य मिस्किनस्य रोदनं श्रुतम् । सः दयाशीलः आसीत् । अतः सः मिस्किनस्य पुरतः प्रत्यक्षीभूय – "वत्स ! किमर्थं रोदिषि ? कीदृशं कष्टम् अनुभूयते भवता ?" इति पृष्टवान् ।

मिस्किनः स्वस्य दुःखकथां तं श्रावयन् उक्तवान् – "मम पुत्र्याः क्षुधानिवारणार्थं मयि सामर्थ्यं नास्ति । एतादृशः अहं जीवामि चेत् अपि को लाभः?" इति ।

याजादः अवनम्य मुष्टिपरिमिताः सिकताः स्वीकृत्य मिस्किनाय दत्त्वा – "जागरूकः सन् एतत् रहस्यं रक्षतु । तदा सर्वं सुखकरं भविष्यति । जीवने यदा भवान् अभिवृद्धिं प्राप्स्यति तदा एतं विचारम् अन्यान् वदतु । अपि च तदा महामपि फलादिकं समर्प्य




प्रसादरूपेण तत्सर्वं भक्तेभ्यः वितरतु । दीनानां साहाय्यं कुर्वन् जीवनं यापयतु" इति वदन् एव अदृश्यः जातः ।

मिस्किनः ताः मुष्टिपरिमिताः सिकताः महत्या जागरूकतया गृहं नीत्वा गृहे एकस्मिन् कोणे रहसि स्थापितवान् । प्रातः उत्थाय यदा तेन दृष्टं तदा ताः सिकताः सर्वाः वज्र-मौक्तिकरत्नरूपं प्राप्तवत्यः आसन् । मिस्किनः एतत् दृष्ट्वा आश्चर्येण स्तब्धः अभवत् । तदा एव याजादाय नमस्कारः अर्पितः तेन । पत्नीपुत्र्यौ च प्रवृत्तं समग्रं वृत्तान्तम् अवदत् सः ।

ततः सः तेषु एकं मणिं स्वीकृत्य वज्र-वणिजः समीपं गतः । तं मणिं दृष्टवतः वणिजः मुखं विकसितम् । मिस्किनस्य निरीक्षातः अपि अधिकमेव धनं दत्तं तेन । तावत् धनं दृष्ट्वा मिस्किनः आश्चर्येण मूकः अभवत् ।



ततः प्रस्थाय सः विपणिं गत्वा आपणे दालः, फलं, पुष्पम्, एला इत्यादीनि क्रीतवान् । मनसि एव दिव्यपुरुषं याजादं स्मरन् तत् सर्वं तस्मै समर्पितवान् । यत् समर्पितं तत् तत्र स्थितेभ्यः वितीर्णवान् ।

तद्दिने गृहे मध्याह्नभोजनं षड्रसपूर्णम् आसीत् । यास्मिनायाः यत् इष्टं तदेव कृतम् आसीत् । सर्वैः आकण्ठं भुक्तम् ।

मिस्किनस्य परिस्थितिः इदानीं वैभवपूर्णा अभवत् । तेन एकं भवनं निर्मितम् । तस्य जीवने कस्यापि अंशस्य न्यूनता न आसीत् । दिव्यपुरुषं सर्वदा भक्त्या श्रद्धया च स्मरति स्म सः । स्वेन धनं कथं प्राप्तम् इति सर्वान् उक्त्वा याजादस्य स्मरणं कुर्वन् तस्मै दालं, फलं, पुष्पं च अर्पयति स्म सः । दीनानां साहाय्यं कुर्वन् दिनानि यापितानि तेन ।

कदाचित् तीर्थयात्रा करणीया इति इच्छा उत्पन्ना तस्य मनसि । अतः सः पुत्रीम् आहूय – ''तीर्थयात्रा करणीया इति इच्छा मयि उत्पन्ना अस्ति । अतः अहं प्रातः एव गृहतः प्रस्थानं करिष्यामि । मम आगमनपर्यन्तं भवत्या प्रतिदिनं पूजा करणीया । दिव्यपुरुषाय यानि वस्तूनि समर्प्यन्ते तानि सर्वेभ्यः वितरणीयानि'' इति उक्तवान् ।

''चिन्ता मास्तु । मया सर्वं क्रियते । भवान् निश्चिन्तः सन् तीर्थयात्रां समाप्य आगच्छतु'' इति उक्तवती यास्मिना ।

किन्तु पितुः निर्गमनस्य अनन्तरम् अल्पे एव काले तस्याः व्यवहारे परिवर्तनम् आगतम् । नगरे स्थितानां धनिकानां स्नेहः तया लब्धः । राजकुमार्याः परिचयोऽपि लब्धः तया । सः परिचयः स्नेहरूपेण परिवृत्तः अपि । उभे अपि प्रतिदिनं विहारार्थं बहिः गच्छतः स्म । एवं यस्य अनुग्रहेण सम्पत् प्राप्ता तं दिव्यपुरुषं विस्मृतवती सा । पित्रा उक्ता पूजा अपि न कृता तया । तस्मै दालं, फलं, पुष्पं च समर्प्य अन्येभ्यः दातव्यम् इति यत् सूचितम् आसीत् तदपि विस्मृतं तया ।

एकदा सा राजकुमार्या साकं राजोद्याने अटन्ती सुन्दरमेकं सरोवरं दृष्टवती । तदा राजकुमारी – ''सरोवरे तरणं करवाव'' इति उक्तवती ।

यास्मिना तु – ''अहं तरणं न जानामि । भवत्या तरणं क्रियताम् । अहं तटे उपविशामि'' इति वदन्ती कस्यचित् वृक्षस्य अधः उपविष्टा ।

राजकुमारी स्वस्य आभरणानि अवमोच्य

यास्मिनायाः समीपे संस्थाप्य सरोवरं प्रविष्टवती । तदा सुखकरः वायुः वाति स्म । तेन सुखम् अनुभवन्ती यास्मिना निद्रायां लीना जाता । तदा कश्चित् पक्षी डयमानः आगत्य राजकुमार्याः कण्ठहारं नीतवान् । एतत् यास्मिनया न लक्षितम् एव ।

तरणं स्नानं च समाप्य राजकुमारी यदा प्रत्यागता तदा कण्ठहारः न दृष्टः तया । तेन खिन्ना अभवत् सा । सा कोपेन यास्मिनाम् उक्तवती – ''भवती एतादृशं नीचं कार्यं करोति इति मया स्वप्ने अपि न चिन्तितम् आसीत्'' इति ।

तदा यास्मिना उक्तवती – ''अहं किमपि न जानामि'' इति ।

किन्तु तस्याः वचसि राजकुमार्याः विश्वासः न उत्पन्नः । सा राजभवनं गत्वा पितरं सर्वम् उक्तवती । तदा राजा यास्मिनां तस्याः मातरं च कारागृहे स्थापितवान् ।

यात्रातः प्रत्यागतः मिस्किनः पार्श्वगृहीयानां मुखात् प्रवृत्तं सर्वं श्रुतवान् । तस्मात् खिन्नः सः राज्ञः समीपं गत्वा तस्य पादयोः पतित्वा क्षमां प्रार्थितवान् । तं निवेदितवान् यत् मम पत्नीपुत्र्यौ बन्धनात् विमुच्य मां कारागृहे स्थापयतु इति । राजा मिस्किनस्य इच्छां पूरितवान् ।

भटाः मिस्किनं निगडेन स्तम्भे बद्धवन्तः आसन् । तस्यां रात्रौ सः तं दिव्यपुरुषं याजादं मनसि स्मृतवान् । याजादः प्रत्यक्षीभूय – 'उपकारं कृतवतः विस्मरणम् अपराधाय इति भवान् जानाति एव । भवता महान् दोषः आचरितः'' इति उक्तवान् ।

''मम मुग्धपुत्री एतम् अपराधं कृतवती । अस्य अपराधस्य फलमपि तया प्राप्तमेव । अस्मान् कृपया क्षाम्यतु । अस्मासु दयापूर्णः सन् अस्मात् कष्टात् विमोचनं प्राप्तुं कमपि मार्गं प्रदर्शयतु'' इति मिस्किनः गद्गदस्वरेण उक्तवान् ।

तस्य परिस्थितिं दृष्ट्वा याजादः दयार्द्रः सन् – ''श्वः प्रातःकाले भवान् निगडात् मुक्तः भविष्यति । तदा भवतः समीपे धनं दृश्यते । तेन धनेन फलं, पुष्पं, दालं च आनीय मह्यं समर्पयति चेत् सङ्कटात् भवान् मुक्तः भविष्यति'' इति उक्त्वा ततः अदृश्यः अभवत् ।

आरात्रि मिस्किनेन निद्रा न प्राप्ता । प्रातः दिव्यपुरुषस्य कथनानुगुणं निगडः भटैः अपनीतः । स्तम्भसमीपे धनमपि दृष्टं तेन ।

धनं स्वीकृत्य बहिः अटन्तं कञ्चित् पथिकं



दृष्ट्वा तम् आहूय - "मित्र ! एतस्मात् धनात् दालं, फलं, पुष्पं च आनीय ददातु कृपया" इति प्रार्थितवान् ।

सः पथिकः त्वरया गच्छन् आसीत् । यतः स्वस्य पुत्रस्य अस्वास्थ्यं तेन इदमिदानीं ज्ञातम् आसीत् । पुत्रः मरणावस्थाम् आपन्नः अस्ति इति तेन श्रुतम् आसीत् । तथापि मिस्किनस्य करुणापूर्णं वचनं श्रुतवतः तस्य मनः द्रुतम् अभवत् । सः स्वस्य कष्टस्थितिं क्षणकालं विस्मृत्य मिस्किनेन उक्तं सर्वं वस्तु आनीय तस्मै समर्पितवान् । मिस्किनः तत् स्वीकुर्वन् स्वस्य समग्रां कथाम् उक्त्वा तानि वस्तूनि देवाय समर्प्य प्रसादं तस्मै पथिकाय दत्त्वा तं प्रेषितवान् ।

सः पथिकः त्वरया गृहं गत्वा पश्यति - स्वस्थः पुत्रः हसन् पुरतः आगतः अस्ति ! अनेन प्रभावितः सः अपि दिव्यपुरुषस्य पूजां कृतवान् ।

कदाचित् राजा राजोद्याने परिवारेण सह विहरन् आसीत् । तदा कस्यचित् पक्षिणः मुखात् राजकुमार्याः कण्ठहारः अधः पतितः । हारं दृष्ट्वा सन्तुष्टा राजकुमारी - "पितः ! मम कण्ठहारः मया लब्धः । अहम् अविचार्य यास्मिनया चौर्यं कृतमिति मिथ्यारोपं कृतवती" इति विषादेन उक्तवती ।

राजा एतत् श्रुत्वा मनसि दुःखं प्राप्तवान् - 'विचारणाम् अकृत्वा अहं मिस्किनं, तस्य पत्नीपुत्र्यौ च कारागृहे स्थापितवान्' इति । सः तत्क्षणे एव मिस्किनं विमोचितवान् ।

मिस्किनं दृष्ट्वा राज्ञा उक्तम् - "आर्य ! अहं क्षन्तव्यः भवता । मया कृतम् अपराधं परिहर्तुम् एकः एव मार्गः अस्ति । मम पुत्रः भवतः पुत्रीं परिणयतु । भवादृशस्य दैवभक्तस्य परिवारस्य सम्बन्धः पूर्वजन्मनः पुण्यवशात् एव प्राप्यते" इति ।

मिस्किनः अनेन बहु सन्तुष्टः अभवत् । यास्मिनायाः विवाहः राजकुमारेण सह महता वैभवेन सम्पन्नः ।

एतत् सर्वं तस्य दिव्यपुरुषस्य एव अनुग्रहात् जातम् इति मिस्किनः ज्ञातवान् ।





# उत्तमं किम् ?

स्वर्णगिरिराज्यं भुवनगिरिराज्यस्य प्रतिवेशिराज्यम् । तयोः विस्तारे जलादिविषये च महत् अन्तरम् आसीत् । स्वर्णगिरौ तिस्रः लघुनद्यः प्रवहन्ति स्म । अतः तत्रत्या भूमिः फलसमृद्धा आसीत् ।

किन्तु भुवनगिरेः स्थितिः अन्या एव । न तत्र कापि नदी आसीत् जलदायिनी । प्रतिवर्षं काले काले वृष्टिः अपि न भवति स्म । अतः तत्र क्षामः पुनः पुनः भवति स्म । किन्तु तस्य देशस्य राजा विमलादित्यः शासनदक्षः आसीत् । प्रजानां हितम् एव तस्य एकमात्रलक्ष्यम् आसीत् । अतः तस्य शासनकाले देशे प्रगतिः दृश्यते स्म ।

अथ कदाचित् स्वर्णगिरेः आस्थानपण्डितः कमलनाथः भुवनगिरिराजं द्रष्टुम् आगतवान् । सः राजानं दृष्ट्वा उक्तवान् - ''महाराज ! न केवलं दैवीयसम्पत्त्या, अपि तु कलासमृद्ध्या अपि युक्तः अस्ति अस्माकं देशः'' इति ।

तदा राजा मन्दहासपूर्वकम् उक्तवान् - ''महतः सन्तोषस्य विषयः एषः'' इति ।

''अस्माकं देशे संस्कृतं सर्वेषां व्यवहारभाषा अस्ति । अस्माकं प्रजानां बुद्धिशक्तिः मेधाशक्तिः च अपूर्वा'' इति ।

कमलनाथः एवं स्वकीयस्य राज्यस्य वैशिष्ट्यानि बहुधा वर्णयन् आसीत् । राजा तु सर्वं मन्दहासपूर्वकं शृणोति स्म । तदा आस्थानकविः कुमुदः अग्रे आगत्य उक्तवान् - ''कमलनाथवर्य ! भवतां राज्ये सम्पत्तिः कला इत्यादीनां समृद्धिः स्यान्नाम । तथापि बुद्धिमत्ता-मेधाशक्त्यादयः अस्माकं देशे एव आधिक्येन सन्ति इति यत् भवता चिन्त्यते तत् अनुचितम् । अस्माकं प्रजानां बुद्धिमत्ता अपि न न्यूना'' इति ।

''किम् एतत् प्रमाणीकर्तुम् अर्हति भवान् ?'' इति पृष्टवान् कमलनाथः ।

''निश्चयेन । भवान् स्वयम् एव एतत् परीक्षितुम् अर्हति । ग्रामजनानां परीक्षातः



एव एतस्य आरम्भः भवितुम् अपि अर्हति'' इति उक्तवान् कुमुदः महता आत्मविश्वासेन ।

''भवतु नाम । तथैव करिष्यामि'' इति उक्त्वा कमलनाथः आस्थानात् निर्गतवान् । अनन्तरदिने सः नगरसीमायां स्थितं कञ्चित् ग्रामं प्राप्तवान् ।

ग्रामसीमायां धेनूः चारयन् कश्चन तरुणः तेन दृष्टः । कमलनाथः तम् अपृच्छत् - ''वत्स ! किं नाम भवतः ? किं कुर्वन् अस्ति भवान् ?'' इति ।

''मम नाम तु रङ्गः इति । इदानीं तु वृक्षस्य फलानि अवचिन्वन् अस्मि'' इति उक्तवान् सः युवकः कार्यं कुर्वन् एव ।

''एतस्मिन् घोरे आतपे किमर्थं कार्यं क्रियते भवता ? कुत्रापि उद्योगः प्राप्तुं शक्यः आसीत् खलु भवता ?'' इति अपृच्छत् कमलनाथः ।

''अहं विद्याभ्यासं न कृतवान् । पठन-लेखनादिकम् अपि न जानामि । एतादृशाय मह्यं को वा उद्योगं दद्यात् ? अतः एतां वृत्तिम् आश्रितवान् अस्मि'' इति अवदत् रङ्गः ।

''रङ्ग ! मम त्रयः सन्देहाः सन्ति । किं तान् भवान् दूरीकर्तुं शक्नुयात् ?'' इति पृष्टवान् कमलनाथः ।

''भवान् तु महापण्डितः । भवादृशस्य सन्देहः कथं दूरीकर्तुं शक्येत मया ? तथापि प्रयत्नं तु कर्तुं शक्नोमि'' इति अवदत् रङ्गः ।

''पुष्पेषु श्रेष्ठतमं पुष्पं किम् ?'' इति अपृच्छत् कमलनाथः ।

''कमलम्'' इति अवदत् रङ्गः ।

''युक्तम् उक्तं भवता । कमलं लक्ष्म्याः सरस्वत्याः चापि निलयः । जलेषु उत्तमं जलं किम् ?'' - पण्डितः अपृच्छत् ।

''जलप्रपातस्थं जलम्'' इति उक्तवान् रङ्गः ।

''भवतः एतदपि उत्तरं युक्तम् एव । शिवजटातः निर्गतायाः आकाशगङ्गायाः जलं परमपवित्रं शुद्धं च'' इति उक्त्वा कमलनाथः तृतीयं प्रश्नम् अपृच्छत् - ''प्रकाशेषु कीदृशः प्रकाशः उत्तमः ?'' इति ।

''सूर्यप्रकाशः'' इति अवदत् रङ्गः ।

''आम् । सर्वप्रकाशानां मूलं भवति भगवतः सूर्यस्य किरणावली । भवतः उत्तरं बुद्धिमत्तायुक्तम् अस्ति । प्रशंसार्हः भवान्'' इति उक्त्वा मकलनाथः स्वस्य अङ्गुल्यां स्थितम् अङ्गुलीयकं तस्मै दातुम् उद्युक्तः ।

तदा रङ्गः तस्य स्वीकरणं निराकुर्वन् उक्त-

वान् - ''भवता ये प्रश्नाः पृष्टाः तेषाम् उत्तराणि सर्वे दातुम् अर्हन्ति । एतदर्थम् उपायनदानस्य का आवश्यकता ?'' इति ।

तदा कमलनाथः आश्चर्येण पृष्टवान् - ''सामान्याः यादृशम् उत्तरं दातुं न शक्नुयुः तादृशम् अपि उत्तरं किं भवान् दातुम् अर्हेत् ?'' इति ।

''प्रयत्नं करोमि'' इति विनयेन अवदत् रङ्गः ।

''वदतु तावत् । तत् श्रोतुं ममापि अस्ति महत् कुतूहलम्'' इति अवदत् कमलनाथः ।

''उत्तमं पुष्पं कमलं न, अपि तु कार्पास-पुष्पम् । कमलपुष्पं द्रष्टुं सुन्दरं स्यात्, किन्तु यदा तत् म्लानं भवति तदा तत् निरर्थकं भवति । कार्पासपुष्पं तु फलरूपतां प्राप्य कार्पासत्वं च आसाद्य वस्त्रादिनिर्माणे उपकारकं भवति । अतः तदेव श्रेष्ठतमं पुष्पम् । मरुभूमौ प्राप्यमाणं जलम् एव श्रेष्ठं जलं, यतः तत् भवति प्राणरक्षकम् । मनुष्याणां नेत्रयोः दृश्यमाना कान्तिः एव श्रेष्ठः प्रकाशः । करुणापूर्णा कान्तिः दीनान् रक्षितुम् अर्हति'' इति विवृतवान् रङ्गः ।

कमलनाथः रङ्गस्य उत्तरं श्रुत्वा आश्चर्येण स्तब्धः जातः । सः तं प्रीत्या आलिङ्गितवान् । सः चिन्तयति स्म यत् मम राज्ये जनानां यादृशी बुद्धिमत्ता तादृशी अन्यत्र कुत्रापि नास्ति इति । किन्तु रङ्गः तस्य तं भावं मिथ्या कृतवान् आसीत् । अतः कमलनाथस्य अहङ्कारः दूरं गतः आसीत् ।

भुवनगिरिस्थाः जनाः प्रतिकूलस्थितौ अपि असाधारणीं प्रगतिं प्रदर्शयन्ति यत् तस्मात् कमलनाथः नितरां सन्तुष्टः आसीत् । 'एतस्य सर्वस्य मार्गदर्शनं यः करोति सः राजा निश्चयेन प्रशंसार्हः' इति अचिन्तयत् सः । राजानं बहुधा प्रशंसन् सः स्वर्णगिरिं प्रतिगतवान् ।




चन्दमामायाः प्रस्तुतिः
अजेयः गरुडः
चित्रं - पाणिः
नरेन्द्रदेवरवीन्द्रदेवौ राजद्रोहित्वेन घोषितौ । ततः आदित्यः तयोः ग्रहणाय गच्छति । सर्पदिशं गत्वा सर्वेक्षणाय आदिवासिनां गणं नियोजयति । ते आदिवासिनौ दम्पती गृह्णन्ति । तयोः पुरतः आदित्यः रहस्यम् उद्घाटयति यत् अहम् एव आदित्य इति । सेनाध्यक्षः तत्सहचराः च नदीक्रमणाय नौकासमीपम् आगच्छन्ति । तेषां मार्गस्य रक्षणं करोति आदिवासिप्रमुखः ।


नरेन्द्रदेवः तत्सहचराः च नौकायां प्राप्यमाणानां सर्वेषां सुखसाधनानाम् उपयोगं कुर्वन्ति । ते खादने पाने च मग्नाः ।
आदित्यः एतस्याः संहारयात्रायाः लक्ष्यम् अस्ति ।
यदि सः षष्टितमबलित्वेन प्राप्येत तर्हि तान्त्रिकवर्यः महाशक्तेः स्वामी भविष्यति ।


कौमुदीमयी रात्रिः । शीतलः वायुः । नाविकानां मन्दस्वरेण गानम् । यात्रिणः गहननिद्रां कुर्वन्तः सन्ति ।
वयं प्रातःकालाभ्यन्तरे तीरं प्राप्नुयाम ।

यदा अरुणोदयः जातः तदा आदित्यपक्षीयैः नौका दृष्टा । यावत् नाविकाः सेनाध्यक्षं जागरितवन्तः ततः पूर्वम् एव अग्निगोलानां वर्षणम् आरब्धम् । बाणाः अपि निरन्तरम् आपतन्ति ।

सेनाध्यक्षस्य नौका आगच्छन्ती अस्ति ।

नाविकः कुत्र -? किं सेनाधि आघातः प्राप्तः ?

सेनाध्यक्षः रक्ष्यताम् ।

नरेन्द्रदेवः तदनुचराः च विलम्बेन जागरिताः भवन्ति । नाविकाः अग्निगोलेभ्यः आत्मनः रक्षणाय नद्यां कूर्दन्तः सन्ति । मकराः तान् ग्रहीतुम् उद्युक्ताः भवन्ति ।

अग्निगोलकानि ? के तानि पातयन्ति ?

महोदय ! अहम् अग्निना ग्रस्तोऽस्मि । मां रक्षतु कृपया ।

भवतः नाविकाः कुत्र गताः ?

मकरः ! अहो, मम अन्तिम क्षणः एषः ।

नरेन्द्रदेवः आदिवासिप्रमुखः च दिग्भ्रान्तौ स्तः । नाविकाः अग्निगोलतः बाणवर्षणाच्च नौकायाः रक्षणे असमर्थाः सन्ति । नौका शिलया घट्टिता सती अधोमुखीभवति ।

आर्य ! इदानीं किं करवाम वयम् ?

सेनाध्यक्षवर्य ! इदानीं नद्यां तरद्भिः एव अस्माभिः कथञ्चित् तीरं प्राप्तव्यम् अस्ति ।

अहो, मकरः !! मम हस्तः ! मम पादः अपि गतः ।

अधोमुखतां गता नौका प्रवाह-वेगेन तीरं प्रति नीयते ।

सेनाध्यक्षवर्य ! एषोऽहम् आगतः । नौकां दृढतया गृह्णातु ।


आदिवासिनां प्रमुखं बुभुक्षिताः मकराः खण्डशः कृत्वा खादन्ति । शरीरस्य अवशिष्टाः भागाः जले मज्जिताः भवन्ति । तत्र सर्वं रक्तमयं दृश्यते ।
भगवतः कृपया वयम् एतं रक्षितुं शक्ताः ।
एतस्य पादौ न दृश्येते । एकः हस्तः अपि ।
सः मूर्च्छितः ।
सचेतनतां प्राप्तवान् नरेन्द्रदेवः महान्तं पश्चात्तापम् अनुभवति ।


मया पापम् आचरितम् । अहं राजद्रोही । इतः परं बहूनि दिनानि अहं न जीविष्यामि । भगवन् ! अचिरात् एव मम प्राणान् नयतु कृपया ।


एतम् अस्माकं शिबिरं नीत्वा योगक्षेमादिकं पश्यन्तु । यावत् अन्ये अत्र न आगच्छेयुः तावत् वयम् अत्रैव तिष्ठाम ।


विद्रोहिणः आदिवासिनः अग्निकुण्डसमीपे सम्मिलिताः भवन्ति । तत्र नृत्यं गीतं च आरभन्ते च ।
अनुवर्तते

# कालोऽयं मनोविनोदस्य

तिङ्कः स्वस्य हस्ते विविधान् वर्णमयान् फुग्गान् गृहीतवान् अस्ति । तेषु कस्य वर्णस्य कति सन्ति इति किं भवन्तः गणयितुम् अर्हन्ति ?

कोऽयं जलात् उत्प्लुतः अस्ति ? बिन्दून् योजयित्वा उत्प्लुतवन्तं तम् अभिजानन्तु ।





फलकस्य उपरि कश्चित् पक्षिणं पश्यन्ति खलु भवन्तः ? तस्य विविधाः भागाः कृष्णफलके चित्रिताः सन्ति । तान् भागान् कागदे विलिख्य योग्येन क्रमेण योजयित्वा पक्षी निर्मातव्यः । एतत् शक्यं खलु ?



एते सर्वे पक्षिणः
समानाकारकाः इव भान्ति ।
तथापि एकः अन्येभ्यः भिन्नः ।
सः पक्षी कः ?






रेणुवर्या बिस्किट्विक्रेत्री ।
तस्याः पुरतः सन्ति स्थालिकासु
विविधानि बिस्किटानि । तस्याः
हस्ते यत् अस्ति तत् तत्सदृशैः
सह एव किं स्थापयितुं
शक्नुवन्ति भवन्तः ?








लिख्यतां शीर्षिका

# चित्रशीर्षिकास्पर्धा





**उपरितनं चित्रद्वयं दृष्ट्वा परस्परसम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?**

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -
**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

युक्ता शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यन्ते ।
पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

**'जनवरी'मासस्य चित्रशीर्षिकाप्रेषकः -**
**जयलक्ष्मी कुन्हिकृष्णन् नयमार्**
*श्रीवत्सम्, चेडिच्चेरि, ऐरुवलप्परम्बा,*
*डि - कण्णूरु, केरलम् - ६७० ५९३*

**पुरस्कृतशीर्षिका**



**विज्ञानं ग्रन्थेषु तदात्वे ।**
**विज्ञानं यन्त्रेषु अद्यत्वे ।**

*तिङ्गस्य हस्ते धूम्रवर्णीयाः ४, रक्ताः ५, पीताः ३, नीलाः ३, पाटलाः २, एकः हरिद्वर्णीयः च फूद्राः सन्ति ।*

*'डि'पक्षी अन्येभ्यः भिन्नः ।*

*रोनुशशायाः हस्तस्थं बिस्किट् द्वितीयस्थालिकास्थैः साम्यं भजते ।*

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 600 026 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : Viswam

मैसूरुश्रीगन्ध-बालफेनकं
श्रीगन्धवातामयोः तैलेन
समृद्धम् अस्ति । चर्मणः
आरोग्यस्य रक्षणाय नितराम्
उपकारकम् एतत् ।

# चिन्तोः फेनकचयनम्




चतुराः बालाः
सदापि मैसूरुश्रीगन्ध-
बालफेनकम् एव
इच्छन्ति ।




Almond oil moisturiser and antiseptic soap.



गतेभ्यः अशीतिवर्षेभ्यः
श्रीगन्धस्य सुगन्धं गृहं
गृहं प्रापयन्ती अस्ति
मैसूरुश्रीगन्ध संस्था ।

CHANDAMAMA (Sanskrit) MARCH 2003 Registered No. TN/PMG(CCR)-589/03-05
Regd. with Registrar of Newspaper for India No. 42664/85 Licensed to post without prepayment No. 371/03-05
Foreign - WPP. No. 372/03-05